# अभिज्ञानशकुन्तलम् ।

## महाकविश्रीकालिदासप्रणीतम् ।



—:०*०:—

शब्दाचार्य्य-पुराणशास्त्रि सांख्यरत्न-व्याकरणतीर्थ

काव्यतीर्थ-स्मृतितीर्थोपाधिमता

महोपदेशक

## श्रीहरिदाससिद्धान्तवागीशभट्टाचार्य्य प्रणीतया

अभिज्ञानकौमुदीसमाख्यया

टीकया

वङ्गानुवादेन च

सहितम् ।

—:०:—

१३३० वङ्गाब्दे

तेनैव

प्रकाशितम् ।

मूल्यं २॥०

# अथ नाट्योल्लिखितव्यक्तिगणः ।

## पुरुषगणः ।

सूत्रधारः ... ... प्रस्तावसूचकः प्रधाननटः ।

राजा ... हस्तिनाधिपतिः पुरुवंशीयो दुष्मन्तनामा ।

सूतः ... ... ... अस्य सारथिः ।

वैखानसः ... ... वनवासी तापसः ।

विदूषकः ... ... राज्ञः सहचरः ।

दौवारिकः ... ... राज्ञो द्वाररक्षकः ।

सेनापतिः ... ... राज्ञः सैन्याध्यक्षः ।

ऋषिकुमारौ ... ... ... कण्वशिष्यौ ।

करभकः ... हस्तिनापुरदूतः ।

शिष्यः ... ... ... कण्वस्य ।

कारोत ... ... कश्चित् ऋषिकुमारः ।

कण्वः ... काश्यपगोत्रः कश्चिन्महर्षिः ।

शार्ङ्गरवः<br>शारद्वतमिश्रः } कण्वशिष्यौ ।

कञ्चुकी ... अन्तःपुरचरो वृद्धो ब्राह्मणः ।

पुरोधाः ... राज्ञः पुरोहितः ।

नागरकश्यालः ... राज्ञः श्यालकः ।

रक्षिणौ . जानुक-सूचकाख्यौ राज्ञो नगररक्षकौ ।

पुरुषः कश्चित् धीवरः ।

मातलिः देवराजस्य सारथिः ।

बालकः राज्ञः पुत्रः सर्वदमनो नाम ।

मारीचः कश्यपप्रजापतिः ।

# स्त्रीगणाः ।

नटी ... सूत्रधारस्य स्त्री ।

शकुन्तला ... विश्वामित्रस्यौरसी मेनकागर्भजा कण्वस्य पालिता कन्या ।

अनसूया }
प्रियंवदा } ... शकुन्तलायाः सख्यौ ।

गौतमी ... कण्वस्य धर्मभगिनी ।

प्रतीहारी ... राज्ञः पार्श्वचरी ।

मिश्रकेशी ... शकुन्तलायाः सखी काचिदप्सराः ।

तापस्यः ... कण्वाश्रमस्था मुनिपत्न्यः ।

चेट्यौ ... चित्रकरणार्थं समागतं दासीद्वयम् ।

चतुरिका ... राज्ञः काचित् दासी ।

तापसीद्वयं कण्वाश्रमस्थम् ।

अदितिः कश्यपपत्नी ।

---

# अथ कविसमयनिरूपणम् ।

इह खल्वैहिकनश्वरसुखविमुखानां परमोन्नति-मुक्ति-पथ-पथिकानां प्राचीनानामार्य्याणां केवलदृष्टान्तप्रदर्शनद्वारेण लौकिक एवैहिकसुख-समृद्धिमात्रसाधनप्रयोजनेषु किलेतिहासेषु नासीत् कियानपि यत्नः, आसीच्च वेदानुबन्धिषु नानाविधोपाख्यानसमोक्ततेषु क्रियायोगोपयोगिषु पुराणेषु प्रभूततमः प्रयत्नः। तेन हि भारतेऽस्मिन्नार्य्यजातेरितिहासानामभाव एव सामान्यतः, पुराणानाञ्च प्रचुरतरः प्रचारः परिलक्ष्यते। सुतरामिदानीमतीतविषयविशेषनिरूपणं सुदुष्करं विविधमतभेदसमाकुलञ्च स्यादित्यवश्यमभ्युपेयम्। अतएव कालिदासकालनिरूपणेऽपि सुदुष्करताऽनुभूयते मतभेदाश्च दृश्यन्ते।

मालवदेशान्तःपातिन्यामुज्जयिनीनामराजधान्यां सर्वगुणाकरो विक्रमादित्यो नरपतिरासीत् (१)। तस्य च धन्वन्तरिप्रभृतयो नवरत्नाख्याः पण्डितप्रवरभूताः सभासदो बभूवुः, कालिदासस्तु तेषामन्यतम इत्यत्र नास्ति प्रायेण कस्यचिदपि विप्रतिपत्तिः (२)। तेन तु विक्रमादित्यकालनिर्णयेनैव कालिदासकालो निर्णीतः स्यादिति स एव प्रथमं निर्णेयः।

---

(१) मत्तोऽधुना कृतिरियं सति मालवेन्द्रे
श्रीविक्रमार्कनृपराजवरे समासीत्।"

"यद्राजधान्युज्जयिनी महापुरी सदा महाकालमहेशयोगिनी।" ज्योतिर्विदाभरणम्।

(२) धन्वन्तरि-क्षपणकामरसिंह-शङ्कु-
वेतालभट्ट-घटकर्पर-कालिदासाः।
ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥"

ज्योतिर्विदाभरणम्।

सन्ति च विक्रमादित्यसमयनिरूपणे विविधा मतभेदाः। तथा हि—

केचित्, विक्रमादित्येति न खलु पितृकृतं नाम, अपि तु उपाधि-मात्रमेतत्। तथा च ५३३ खृष्टाब्दे मालवराजो यशोधर्म्मदेवः, मालवदेशस्य पूर्वतः कियन्तमंशं विजितवतस्तोरामणनाम्नो नरपते-र्मरणानन्तरं तदात्मजं मिहिरकुलं विजित्य तदपहृतमंशमासा-दयन् मिहिरकुलं चिरायैव मालवदेशान्निष्काशयामास; तथा तस्मिन् समरे सूर्य्यसमानतेजःप्रकाशात् आदितेयतत्यविक्रमप्रदर्शनाद्वा 'विक्र-मादित्य"मुपाधिञ्च धारयामास; तथा मालवदेशे खृष्टजन्मनः सप्तपञ्चाश-(५७) द्वत्सरपूर्वतः प्रवर्त्तितं नवत्यधिकपञ्चशतसङ्ख्यातं (५९०) मालवसंवत (१) विक्रमसंवन्नाम्ना च परिवर्त्तयामास। तथा च सति यदैव ५९० संख्यातं मालवसंवदासीत्, तदैव तन्नाम्नी परि-वर्त्तितं सत् ५९० संख्यातं विक्रमसंवत् बभूव।

ईदृशानुमाने चायमेव हेतुः, यत्, तत्समरात् पूर्ववर्त्तिनीषु शिला-लिपिषु मालवसंवत् दृश्यते, दृश्यते च तत्समरात् परवर्त्तिनीषु शिलालिपिषु विक्रमसंवदिति। (२)

सुतरां खृष्टीयषष्ठशताब्दीमध्यवर्त्तिनो यशोधर्म्मदेवस्य सभासत् कालिदासोऽपि खृष्टीयषष्ठशताब्दीमध्य एव प्रादुर्बभूव।

युक्त्यन्तरञ्चात्रावतारयन्ति; यत्, विक्रमादित्यसभासदामन्यतमो ज्योतिर्वित् वराहमिहिरः सप्ताधिकपञ्चशतशकाब्दे (५०७शाके)

---

(१) 'संवत्' इत्यव्ययवर्गेऽमरः।

(२) म्याक्स् मुलारस् "इण्डिया होयाट् क्यान् इट् टिच् आस्।" द्वितीयकं [illegible] भूमिका।

कोत्कान्तरमवाप, (१) खृष्टीयाष्टमशततमवर्षे च (७८७ खृष्टाब्दे) शकाब्दारम्भः; तथा च ५८५ खृष्टाब्दे वराहमिहिरमरणात् तत्-समसामयिकः कालिदासोऽपि खृष्टीयषष्ठशताब्दीय एवासीदिति।

६०७ खृष्टाब्दे राजत्वमधिगच्छतः कान्यकुब्जेश्वरस्य हर्षवर्द्धनस्य सभासन्महाकविः कादम्बरीप्रणेता तत्रभवान् बाणभट्टः स्वकीयहर्ष-चरितभूमिकायां कविन्द्रं कालिदासमतीवप्रशशंस (२)। अतः कालि-दासस्य तत्पूर्ववर्त्तित्वाभावो मा प्रश्नं नैव नोपपद्यते।

अतः खृष्टीयषष्ठशताब्दीकाल एव कालिदासाविर्भावकाल इति स्थिरमिति कतिपयीया भारतीयाश्च पुरावृत्तविद्विशेषा निरूपयन्ति। अत्राद्भुतमनुमानं, सन्ति च बहवः प्रतिवादविषयाः।

कालिदासाविर्भावकालः खृष्टीयपञ्चमशताब्दीकाल इतीतरे। चतुर्थशताब्दीत्यपरे। तृतीयशताब्दीत्यन्ये।

प्रमाणान्तरस्तु, खृष्टजन्मनः सप्तपञ्चाशद्वर्षं पूर्वं मालवदेशे भारतलला-मभूतायामुज्जयिनीनामधेयायां नगर्य्यामार्य्याणां गौरवसूर्य्यः सकल-गुणाकरो विक्रमादित्यनामा नरपतिरासीत्। तस्य सभासदां नवसं-ख्यकानां कविपण्डितशिरोमणीनामन्यतमः कालिदासो बभूव। स च खृष्टजन्मनस्त्रयस्त्रिंशत्तमवर्षपूर्वं ज्योतिर्विदाभरणं नाम ग्रन्थं निर्म्मातु-मारभत। तथा च ज्योतिर्विदाभरणशेषाध्याये—

"वर्षे सिन्धुरदर्शनाम्बरगुणैर्याते कलौ सम्मिते
मासे माधवसंज्ञितेऽत्र विहितो ग्रन्थक्रियोपक्रमः"। (३)

---

(१) ब्रह्मगुप्तविरचितखण्डखाद्यटीकानुसन्धेया।

(२) "निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते॥"
हर्षचरितभूमिकायाम्।

(३) सिन्धुरो हस्ती-करी (८) "सिन्धुरः (पुं) हस्ती"ति शब्दकल्पद्रुमः। दर्श

इदानीन्तु (१९२३ खृष्टाब्दे) कलेर्गताब्दाः ५०२४, ततश्च ३०६८ संख्यासु हृतासु १९५६ वर्षसंख्या अवशिष्यन्ते। ततोऽपि च १९२३ खृष्टाब्दसंख्यासु हृतासु ३३ वत्सरास्तिष्ठन्ति। एवञ्च सति खृष्टजन्मनस्त्रयस्त्रिंशद्वत्सरपूर्वं ज्योतिर्विदाभरणरचनारम्भ इति सिद्धम्। ज्योतिर्विदाभरणरचनारम्भ-चतुर्विंशतिवत्सरपूर्वं च विक्रमादित्यराज्याभिषेकसमये विक्रमसंवत्प्रवर्त्तनमभूदित्यनुमीयते। तेनेदानीं १९८० विक्रमसंवत्, ततश्च १९२३ खृष्टाब्दसंख्यासु हृतासु ५७ संख्या अवशिष्यन्ते।

तत् सिद्धं खृष्टजन्माऽव्यवहितपूर्वशताब्दीकाल एव विक्रमादित्यस्य कालिदासस्य च प्रादुर्भावकाल इति।

न चायमपरः कश्चन कालिदास इत्यपि वक्तुं युज्यते,

"काव्यत्रयं सुमतिकृद्रघुवंशपूर्वं
जातं यतो ननु कियच्छ्रुतिकर्मवादः।
ज्योतिर्विदाभरणकालविधानशास्त्रं
श्रीकालिदासकवितो हि ततो बभूव॥"

इत्यनेन ज्योतिर्विदाभरणश्लोकेन रघुवंश-कुमारसम्भव-मेघदूत-कर्त्तुः कालिदासस्यैव ज्योतिर्विदाभरणकर्तृतया स्पष्टाभिधानात्।

नवा राजान्तराश्रितोऽयं कालिदास इत्यपि शक्यते वक्तुम्।

"यत्तोऽधुना श्रुतिविय सति मालवेन्द्रे
श्रीविक्रमार्कनृपराजवरे समासीत्॥
धन्वन्तरि-क्षपणकामरसिंहशङ्कु-
वेतालभट्ट-घटकर्पर-कालिदासाः।

---

नाणि षट् (६), अम्बरं शून्यं (०) गुणास्त्रयः सत्त्वरजस्तमांसि (३) अङ्कस्य च वामा गतिरिति ज्योतिर्विदां नियमः। तथा च कलिद्गतारम्भात् षष्ट्युत्तरत्रिसहस्रवर्षान्ते (३०६८) गतीति माधवसंज्ञिते वैशाखे मासि ज्योतिर्विदाभरणग्रन्थरचनारम्भः कृत इत्यर्थः।

ख्यातो वराहमिहिरो नृपतेः सभायां
रत्नानि वै वररुचिर्नव विक्रमस्य ॥"

इति ज्योतिर्विदाभरणे स्पष्टमभिदधता कालिदासेन स्वयमेवात्मनो विक्रमादित्याश्रिततया परिचायितत्वात् ।

अत्र तु बहुपरिकरत्वेन भारतीयसभ्यताया अर्वाचीनतां प्रतिपादयितुमीहमानानां प्रतिवचनमधरस्फुरितं "प्रक्षिप्तमेत" दिति वचनोच्चार णमन्तरेण नास्ति कश्चित् प्रतिवादोपाय इति सुसमञ्जसमिति ।

अथ तत्रभवान् सकलकविकुलमुकुटमहामणिरसौ जन्मना कतमं वंशं देशं वा समलञ्चकारेति निरूपणमिदानीमसम्भवमेव, तादृशमूलानुपलम्भात् । तत्र ये च सन्ति विविधाः परस्परविरुद्धा लोकप्रवादाः, ते तु प्रायशो न विश्वासपदवीं नावगाहन्ते । सुतरां जीवनचरितसङ्कलनमप्यसम्भवमेव ।

कालिदास इति बङ्गीयनामदर्शनात् बङ्गदेशीय इति केचित् । मगधदेशीय इतीतरे । मालवदेशीय एवेति चान्ये । अपरे त, वक्रमादित्यस्य प्रियसखो मातृगुप्तनामा कश्चिन्महाकविः काश्मीरराजदायादे द्वितीयप्रवरसेने राज्याभिषेकात् पूर्वमेव काश्मीरमपहाय तीर्थपर्य्यटनपरायणे मृते च तदीयपितृव्ये तदानीन्तनकाश्मीरराजे हिरण्यराजे काश्मीरस्य राजशून्यतया तदीयसिंहासने विक्रमादित्येनैव प्रतिष्ठापितः । अथ गच्छति कियति काले मातृगुप्तः प्रियसुहृदो विक्रमादित्यस्य मरणमाकर्ण्य शोककातरः काश्मीरराज्यमपहाय काशीवासमङ्गीकुर्वन् तत्र स्थितेन द्वितीयप्रवरसेनेन सह परमां मैत्रीमापद्यमानः प्राकृतभाषया 'सेतुबन्ध' नामकं महाकाव्यं विरचय्य द्वितीयप्रवरसेनकृत-

मिदमिति प्रख्यापितवान्। कालिदास इति तस्यैव मातृगुप्तस्य नामान्तरमिति वदन्ति।

अस्ति कश्चिदीदृशः सम्प्रदायः, यः खल्वीश्वरेच्छावशादेवोत्कर्षमप-कर्षं वा समापन्नानामपि कालिदासकाव्यानामुत्तममध्यमाधमतादृशं नाद्यैव कालिदासत्रयं मन्यते (१) सत्यं, स पुनः सम्प्रदाय इतः परं तादृश-विविधकाव्यदर्शनात् बङ्किमत्रयं मधुसूदनत्रयमपि मन्येत हन्त। राजशासनभयाभावात् यत् किमप्युच्चारयितुमायासविशेषविरहाच्च यः कश्चिदेव यथेष्टमाचष्टां नाम; तत्र कः प्रतिबन्धुं चेष्टेत इति।

---

(१) 'एकोऽपि जीयते हन्त कालिदासो न केनचित्।
शृङ्गारे मधुरोद्गारे कालिदासत्रयी किमु"

श्री

# अथ स्वरूपनायकादिनिरूपणम् ।

अभिज्ञानशकुन्तलं नामेदं नाटकम्, एतद् नाम्नश्च महाभारतीय-तथा पद्मपुराणीयतया च ख्यातवस्तुत्वात् इतरलक्षणयोगाच्च । यथा साहित्यदर्पणे—

"नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।" इत्यादि ।

अत्र दुष्मन्तो धीरोदात्तो दक्षिणो नायकः । यथा तत्रैव-

"अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः ।
स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः ।"

"एषु त्वनेकमहिलासु समरागो दक्षिणः कथितः ।"

शकुन्तलां तृतीयाङ्कपर्य्यन्तं कन्या मुग्धा च, परन्तु स्वकीया मध्या च नायिका । यथा— तत्रैव

"परकीया द्विधा प्रोक्ता परोढा कन्यका तथा ।"

"प्रथमावतीर्णयौवनमदनविकारा रतौ वामा ।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा ॥"

"विनयार्जवादियुक्ता गृहकर्मपरा पतिव्रता स्वीया ।"

"मध्या विचित्रसुरता प्ररूढस्मरयौवना ।
ईषत्प्रगल्भवचना मध्यमव्रीडिता मता ॥"

न च एकस्या एव कन्या-स्वीया-मुग्धा-मध्यारूपैः साङ्कर्य्यमिति वाच्यम्, कालभेदे तत्र दोषानावहत्वात्—

"क्वचिदन्योन्यसाङ्कर्य्यमासां लक्ष्येषु दृश्यते" इति दर्पणकृतैव तथाङ्गीकृतत्वाच्च ।

विप्रलम्भशृङ्गारः प्रधानरसः । स च गान्धर्वविवाहात् प्राक् पूर्वरागरूपः, परञ्च प्रवासात्मकः । तथा च—

"यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ ।"

"श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः ।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते ॥"

"प्रवासो भिन्नदेशित्वं कार्याच्छापाच्च सम्भ्रमात् ।"

"स्त्रीसंस्थानञ्चाप्सरस्तीर्थमारात् उत्क्षिप्याङ्के ज्योतिरेनां तिरोऽभूत्" इति श्रावुकिवाक्यश्रवणेन राज्ञः शकुन्तलाया मरणानवधारणेन—"यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये" इति लक्षणायोगात् न षष्ठाङ्कतः प्रभृति करुणविप्रलम्भ इति ध्येयम्।

**प्राचुर्य्येण प्रसादो गुणः। यथा—**

"चित्तं व्याप्नोति यः क्षिप्रं शुष्केन्धनमिवानलः।
स प्रसादः समस्तेषु रसेषु रचनासु च"

**बाहुल्येन वैदर्भी रीतिः।** तथा च—

"माधुर्य्यव्यञ्जकैर्वर्णै रचना ललितात्मिका।
अवृत्तिरल्पवृत्तिर्वा वैदर्भी रीतिरिष्यते॥"

"वैदर्भी ललितक्रमा" इति ग्रन्थान्तरे लक्षणान्तरञ्च।

तदयं संग्रहश्लोकः—

**धीरोदात्तः क्षितीन्द्रः पुरुकुलतिलको दक्षिणो नायकोऽस्मिन्
प्राक् कन्यान्ते स्वकीया मुनिवरतनया नायिका मुग्धमध्या।
शृङ्गारे विप्रलम्भे प्रथमचरमयोः पूर्वरागप्रवासौ
वैदर्भी नाम रीतिः प्रचरति बहुलं स प्रसादो गुणश्च॥**

समालोचना तु ग्रन्थान्तरे करिष्यते।

# अभिज्ञानशकुन्तलम्।

## प्रथमोऽङ्कः।

या सृष्टिः स्रष्टुराद्या वहति विधिहुतं या हविर्या च होत्री
ये द्वे कालं विधत्तः श्रुतिविषयगुणा या स्थिता व्याप्य विश्वम्।
यामाहुः सर्ववीजप्रकृतिरिति यया प्राणिनः प्राणवन्तः।
प्रत्यक्षाभिः प्रपन्नस्तनुभिरवतु वस्ताभिरष्टाभिरीशः॥ १॥

---

यस्मिन्नात्मा स्फुरति सततं तत्त्वतो मूर्त्तिहीनः
सन्मूर्त्तिर्वैऽप्यखिलभुवनं कल्प्यते यस्य मूर्त्तिः।
यं तत्रापि प्रकृतकवयो वर्णयन्त्यष्टमूर्त्तिं
वन्दे शम्भुं विगुण-सगुणं तं सदाशैवरूपम्॥

चन्द्रिकेव ललिता शरदिन्दोः माधवीव मधुरा प्रकृतिश्रीः।
कामिनीव च मनोहरभावा कालिदासकविता जयतीयम्॥

अथ महाकविकुलमुकुटमहामणिनातत्रभवता कालिदासेन निर्मितमिदं काव्यस्य निर्विघ्नेन परिसमाप्तिं कामयता निबद्धं मङ्गलश्लोकं 'रङ्गविघ्नोपशान्तये' नान्दीमादौ प्रयोजयेत्" इत्यालङ्कारिकवचनमनुसृत्य रङ्गविघ्नोपशान्तये सूत्रधारः पठति—

या सृष्टिरिति। या तनुः, स्रष्टुः जगत्सृष्टिकर्त्तुः परब्रह्मणः, आद्या सृष्टिः

प्राथमिकं निर्म्माणम्; जलमयीति भावः। या तनुः विधिना शास्त्रेण होमीयशास्त्रा-नुसारेण हुतं प्रक्षिप्तम् हविः हवनीयद्रव्यम्, वहति यजमानोद्देश्यदेवान् प्रापयति; अग्निमयीत्याशयः। या च तनुः, होत्री हवनकर्त्री, यजमानरूपेत्यभिप्रायः। ये द्वे तनू, कालं वार-तिथिप्रभृतिरूपं समयम्, विधत्तो निष्पादयतः; सूर्य्य-चन्द्ररूपं तनु-द्वयमिति तात्पर्य्यम्। श्रुतेः कर्णस्य विषयः शब्दः स एव गुणो यस्याः सा, या तनुः विश्वं समस्तं जगत्, व्याप्य सम्बध्य, स्थिता विद्यमाना; आकाशमयीत्यर्थः। यां तनुम्, सर्वेषां बीजानां धान्यादिशस्यानां प्रकृतिः अङ्कुराद्युत्पादने हेतुः इति आहुः विद्वांसो ब्रुवन्ति; क्षितिरूपेति भावः। यया च तन्वा प्राणिनः शरीरिणः, प्राणवन्तः प्राणादिवायुपञ्चकशालिनस्तिष्ठन्ति; वायुरूपेत्याशयः। ताभिः पूर्वोक्ताभिः, प्रत्यक्षाभिः सर्वेषामेव इन्द्रियगोचरीभूताभिः, अतएव प्रत्याख्यातुमशक्याभिरिति भावः, तनुभिर्मू-र्त्तिभिः कारणैः प्रसन्नो लोकेषु कृतप्रसादः सर्वेष्वेव लौकिककार्य्येषु तासां मूर्त्तीनां सर्वथा प्रयोजनीयत्वात् तासाञ्च निष्पादनादित्याशयः, ईशो महेश्वरः वो युष्मान् विक्रमादि-त्यादिसभ्यजनान्, अवतु रक्षतु।

अत्र प्राणिनः प्राणवन्त इति शब्दद्वयार्थस्य अभिन्नतया आपाततः पुनरुक्तताप्रतीतेः, परञ्च "प्राणी तु चेतनो जन्मी जन्तु-जन्यु-शरीरिणः" इत्यमरप्रामाण्यात् प्राणिशब्देन शरीरिमात्राभिधानेन भेदात् उद्देश्यविधेयभावेन भेदाच्च भिन्नाकारशब्दगतत्वाच्च पुन-रुक्तवदाभासोऽलङ्कारः।

तथा श्रुतिविषयगुणा इत्यनेन आकाशार्थप्रतीतौ विलम्बात् क्लिष्टत्वदोषः। स च प्रथितरवगुणा इति पाठेन समाधेयः।

जलस्य आद्यसृष्टत्वे प्रमाणं यथा मनुः—

"सोऽभिध्याय शरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः।
अप एव ससर्ज्जादौ तासु बीजमवासृजत॥"

अग्निरेव देवेभ्यो हविर्वहनमाह श्रुतिः—"इष्टं वायमितरो जातवेदा देवेभ्यो हव्यं वहतु प्रजानन्।"

“চতুর্থ্যাশ্রমে প্রতিনিধিঃ যাজ্ঞার্থং ঋত্বিগ্‌যজমানয়োরেব সুখ্যাতীরবমগর্থং গম ।

“উদয়াদুদয়াদ্ভানোর্ভৌমসাবনবাসরাঃ” ইতি সূর্য্যসিদ্ধান্তাৎ “তন্মাসং কথিতং ধ্যানাজ্ঞানাস্তিথয়ঃ” ইতি মলমাসতত্ত্বধৃতবচনাৎ তেন সূর্য্যাচন্দ্রমসোরেব বারতিথিনিষ্পাদনম্ ।

“তথা শব্দোঽপি চ শ্রুতেঃ” ইতি, “আকাশস্য তু বিজ্ঞেয়ঃ শব্দো বৈশেষিকো গুণঃ” ইতি, “কালখাত্মদিশাং সর্ব্বগতত্বং পরমং মহৎ” ইতি চ ভাষাপরিচ্ছেদে ।

পৃথিব্যাঃ সর্ব্ববীজকারণত্বন্তু প্রত্যক্ষম্ ।

“প্রাণোঽপানঃ সমানশ্চোদানব্যানৌ চ বায়বঃ ।

শরীরস্থা ইমে ।” ইত্যমরঃ ।

শিবস্যাষ্টমূর্ত্তিত্বে প্রমাণং যথা বিষ্ণুপুরাণম্ —

“সূর্য্যো জলং মহী বহ্নির্বায়ুরাকাশমেব চ ।

দীক্ষিতো ব্রাহ্মণঃ সোম ইত্যেতাস্তনবঃ স্মৃতাঃ ॥”

তিথিতত্ত্বধৃতঞ্চ— “মূর্ত্তয়োঽষ্টৌ শিবস্যৈতাঃ প্রাণ্যাদিক্রমযোজিতাঃ ।

আর্য্যব্যস্তাঃ প্রপূজ্যাস্তা বেদ্যাং লিঙ্গে শিবং যজেৎ ॥

যা সৃষ্টিরিতি “সামানাধিকরণ্যং ক্তপ্রত্যয়ো দ্রব্যবৎ প্রকাশতে” ইতি ন্যায়াৎ সামানাধিকরণ্যম্ । যথা সাধিতঃ পাচকশ্চ ইতি তু “ধর্ম্মেণ ধনবান্” ইত্যাদিবন্নেতি তৃতীয়া ।

স্রগ্ধরা বৃত্তম্—“ম্রভ্নৈর্যানাং ত্রয়েণ ত্রিমুনিযতিযুতা স্রগ্ধরা কীর্ত্তিতেয়ম্” ইতি লক্ষণাৎ ॥১॥

---

যে মূর্ত্তি, জগদীশ্বরের প্রথম সৃষ্টি (জল) ; যে মূর্ত্তি, যথাবিধানে নিক্ষিপ্ত হবি বহন করে (অগ্নি) ; যে মূর্ত্তি, হোম করে (যজমান) ; যে দুইটী মূর্ত্তি, বার-তিথিপ্রভৃতি সময় সম্পাদন করে ( সূর্য্য ও চন্দ্র ); শব্দগুণশালী যে মূর্ত্তি, সমগ্র জগৎ ব্যাপিয়া রহিয়াছে ( আকাশ ),

नान्द्यन्ते सूत्रधारः (क) । अलमतिविस्तरेण । (ख) नेपथ्याभिमुखमवलोक्य ।

आर्य्ये ! यदि नेपथ्यविधानमवसितं तदिहागम्यताम् (ग)

---

(क) नान्द्यन्त इति । नन्दयति आनन्दयति स्तवेन देवादीन् आशिषा वा सभ्यानिति इनन्तनन्दधातोः पचादित्वादचि नन्देति रूपम् ; ततश्च नन्दैव नान्दीति प्रज्ञादित्वात् स्वार्थे अणि स्त्रियामीप्रत्ययः । सा च स्तुत्याशीरन्यतरपरा वाक् इत्यालङ्कारिकसम्प्रदायसिद्धा रूढिः । तथा च साहित्यदर्पणे—

"आशीर्वचनसंयुक्ता स्तुतिर्यस्मात् प्रयुज्यते ।
देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता ॥
माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनी ।
पदैर्युक्ता द्वादशभिरष्टाभिर्वा पदैरुत ॥"

अत्र तु अष्टमूर्त्तिवर्णनया भगवतो महादेवस्य स्तुतिः सभ्यानामाशीश्चोभयमपि निबद्धम् । द्वे कालं विधत्त इत्यनेन च चन्द्रशंसित्वमवधेयम् ।

श्लोकान्तर्गतमेकैकं वाक्यमेव च एकैकं पदम् । तथा च 'या स्रष्टुराद्या सृष्टिः' इत्येकम् ; 'या विधिहुतं हविर्वहति' इति द्वितीयम् ; 'या च होत्री' इति तृतीयम् ; 'ये द्वे कालं विधत्तः' इति चतुर्थम् ; 'श्रुतिविषयगुणा या विश्वं व्याप्य स्थिता' इति पञ्चमम् ; 'यां सर्वबीजप्रकृतिरित्याहुः' इति षष्ठम् ; 'प्राणिनो यया प्राणवन्तः' इति सप्तमम् ; 'प्रसन्न ईशः ताभिः प्रत्यक्षाभिरष्टाभिस्तनुभिः वः अवतु' इति अष्टमम् वाक्यरूपं पदम् । इतीयमष्टपदा नान्दी । तथा च नाट्यप्रदीपे—

'श्लोकपादः पदं केचित् सुप्तिङन्तमथापरे ।
परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे ।"

---

পণ্ডিতগণ, যে মূর্ত্তিকে সমস্ত শস্তের হেতু বলিয়া থাকেন (পৃথিবী) এবং প্রাণিগণ, যে মূর্ত্তি দ্বারা প্রাণবান্ থাকে (বায়ু) ; মহাদেব প্রসন্ন হইয়া, প্রত্যক্ষ সেই অষ্টমূর্ত্তি দ্বারা আপনাদিগকে রক্ষা করুন ॥১॥

भरतनाट्यशास्त्रटीकायामभिनवगुप्ताश्च—'पदानि श्लोकावयवभूतानि तिङन्तानि सुब-न्तानि वा श्लोकतुरीयांशपदानि वा अवान्तररूपाणि वा ।"

एतच्चास्माभिः साहित्यदर्पणटीकायां बहुधा विस्तृतं द्रष्टव्यमिति नान्दीलक्षण-सङ्गतिः ।

तथा 'या सृष्टिः स्रष्टुराद्या' इत्यनेन उपरितनश्लोकादिमतया काव्यरूपा व्यक्तिः सूच्यते । 'या विधिहुतं वहति हविः' इत्यनेन दुष्यन्तनिक्षिप्तवीर्य्यवहनात् शकुन्तला । 'ये द्वे कालं विधत्तः' इत्यनेन तद्वीर्य्यनिषेकपात्रसरनिष्पादनात् अनसूया-प्रियंवदे सूच्येते । 'या विश्वं व्याप्य स्थिता' इत्यनेन आकाशसम्पर्किणी मिश्रकेशी । 'यां सर्वबीजप्रकृतिरित्याहुः" इत्यनेन प्रजापतिरूपत्वाददितिकश्यपौ "प्राणिनो यया प्राण-वन्तः" इत्यनेन च पूर्वपूर्वासूचितानि सूतविदूषकादीनि सर्वाणि पात्राणि सूच्यन्ते, वायुना प्राणिनां प्राणवत्त्वस्येव तैः सर्वैः पात्रैरस्य काव्यस्य नाटकत्वनिर्वाहात् । अत-एवेयं पत्रावलीसंज्ञा नान्दी । यथा नाट्यदर्पणे—

"यस्यां बीजस्य विन्यासो ह्यभिधेयस्य वस्तुनः
श्लेषेण वा समासोक्त्या नान्दी पत्रावलीति सा ॥"

एतादृश्याश्च नान्द्या अन्ते पाठावसाने, सूत्रधारः प्रधाननटः ब्रवीतीति शेषः । इत्यमन्यत्रापि ब्रवीतीत्यध्याहरणीयक्रियायाः कर्त्तरि प्रथमा बोद्धव्या । सूत्रं नाटकीय-कथासूचनं धारयति उपस्थापयतीति सूत्रधारः । तथा चोक्तम्—

"नाटकीयकथासूत्रं प्रथमं येन सूच्यते ।
रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते ॥"

(ख) अलमिति । अतिविस्तरेण नान्द्या अत्यन्तबाहुल्येन, अलम् इतोऽप्यतिवि-स्तृतनान्दीप्रयोगो व्यर्थ इत्यर्थः । तथा च सुप्तिङन्तरूपाष्टपदां नान्दीमपेक्ष्य अवान्तराष्ट-वाक्यरूपाष्टपदनान्दीप्रयोगादेव किञ्चिद्विस्तरो जातः ; इतोऽपि विस्तृतरूपायाः श्लोक-पादात्मकाष्टपदादिनान्द्याः प्रयोगो निरर्थक एव ; एतावत्यैव नान्द्या कर्त्तव्यमङ्गला-चरणनिर्वाहात् एतदधिकत्वे च निष्प्रयोजनसमयक्षेपादिति भावः ।

नटी । प्रविश्य । अज्ज ! इअम्हि ! आणवेदु अज्जो को णिओओ अणुचिट्ठिअदु त्ति । (ख)

---

(ख) आर्य्य ! इयमस्मि । आज्ञापयतु आर्य्यः को नियोगोऽनुष्ठी-यतामिति ।

---

(ग) नेपथ्येति । शोभाद्भवस्य मुख्यनेपथ्यस्य अमूर्त्ततया तदाभिमुख्यासम्भवादत्र नेपथ्यपदेन तद्विधानगृहं लक्ष्यते । तथा च नेपथ्यस्य वेशविधानगृहस्य अभिमुखं यथा स्यात्तथा, अवलोक्य सम्बोधनीया नटी विद्यते नवा इति दृष्ट्वा । सम्बोध्यस्य अवस्थिति-स्थानाभिमुख्येनैव सम्बोधयन्तीति लोकव्यवहारमनुसृत्यैवेदमभिहितम् । अन्यथा सभा-दिकमवलोकयता सूत्रधारेण नटीसम्बोधने कृते तस्य लोकव्यवहारानभिज्ञताप्रत्ययात् सभ्यानां विरक्तिः स्यादिति बोध्यम् ।

आर्य्ये ! साध्वि ! । एतेन अभिनयात्मकस्वजातीयव्यवसायविधायिनी मत्पत्न्येवे-यम्, न पुनरभिनयाय वेतनभागिनी वेश्येति सूचितम् । नेपथ्यविधानं वेशरचना, अव-सितं परिसमाप्तम्, तत् तदा , इह अस्मिन् स्थाने ।

"आकल्पवेशौ नेपथ्यम्" इति । "महाकुलकुलीनार्य्यसभ्यसज्जनसाधवः" इति च अमरः ।

"वाच्यौ नटीसूत्रधारावार्य्यनाम्ना परस्परम्" इति साहित्यदर्पणात् 'आर्य्ये' इति नटीसम्बोधनम् । एवं परत्र नटीवाक्यादावपि ज्ञेयम् । तथा सूत्रधारस्य मनीषितया शिक्षिततया च संस्कृतभाषाप्रयोगः । तथा च दर्पणे—

"पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम् ।"

---

নান্দীপাঠের পর সূত্রধার। অতিবস্তৃত নান্দীপাঠে প্রয়োজন নাই। (বেশরচনাস্থানের প্রতি দৃষ্টিপাত করিয়া) আর্য্যে! যদি বেশ-বিধান সমাপ্ত হইয়া থাকে, তবে এই স্থানে আইস।

सूत्र। आर्य्ये! इयं हि रसभावदीक्षागुरोर्विक्रमादित्यस्य अभिरूपभूयिष्ठा परिषत्। अस्याञ्च कालिदासग्रथितवस्तुना नवेनाभिज्ञानशकुन्तलनामधेयेन नाटकेनोपस्थातव्यमस्माभिः, तत् प्रतिपात्रमाधीयतां यत्नः। (ङ)

---

(घ) नटीति। प्रविश्य रङ्गालये इति शेषः। इयमहम्, अस्मि आगतेत्यर्थः। को नियोग आदेशः, अनुष्ठीयतां मया क्रियताम्, इति आर्य्यो भवान्, आज्ञापयतु। आदेशप्राप्तिमात्रमेवाहं तदनुष्ठानाय प्रवर्त्तिष्ये इति भावः।

अस्या अपि अनीचतया शिक्षिततया च शौरसेनीभाषाप्रयोगः। यथा दर्पणे-

"शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्।"

(ङ) सूत्रेति। भीमशब्दादिना भीमसेनादिप्रतीतिवदत्रापि "एकदेशेन समुदायो गम्यते" इति न्यायात् सूत्रपदेनैव सूत्रधारः प्रत्येतव्यः। एवमन्यत्रापि। हि यथाहि त्वत्प्रार्थितनियोगमेव जानीहीत्यर्थः। रसः शृङ्गारादिः भावश्च निर्वेदादिः तयोर्विषये विशेषेण दीक्षागुरुः प्राधान्येनोपदेष्टा तस्य रसभावविषयेष्वतीवाभिज्ञस्येत्यर्थः, विक्रमी तेजःप्रतापसम्पन्नः पराक्रमी आदित्य इव तस्य विक्रमादित्योपाधिकस्य उज्जयिनीपतेर्यशोवर्म्मदेवस्येत्यर्थः, अभिरूपाः पण्डिता एव भूयिष्ठा अतिबहुला यस्यां सा तादृशी, परिषत् सभा सभास्तीति शेषः। किञ्चेति चार्थः। कालिदासेन तदाख्येन केनचित् कविना ग्रथितं निबद्धं वस्तु सर्वो विषयो यस्मिन् तेन, नवेन नूतनेन, अभिज्ञानशकुन्तलं नामधेयं नाम यस्य तेन, नाटकेन तदाख्यदृश्यकाव्यविशेषेण, अस्यां परिषदि, उपस्थातव्यम् उपासितव्यं सभ्यानां सन्तोषो विधातव्य इत्यर्थः; तत् तस्मात्, प्रति-

---

নটী। (প্রবেশ করিয়া) আর্য্য! এই আমি আসিয়াছি; আ— আপনি আদেশ করুন, কোন আজ্ঞা পালন করিতে হইবে।

সূত্রধার। আর্য্যে! রস ও ভাবের বিশেষ শিক্ষক মহারাজ বিক্র-

भावम् एतन्नाटकाभिनये सम्प्रत्यस्मत्कृतिविषये, यतः तेषामभिनयसौष्ठवादौ आदरः, आधीयतां क्रियताम् । त्वां प्रति एष एव मे नियोग इति भावः ।

"अभिरूपो बुधे रम्ये" इति मेदिनी । "समज्या परिषद्गोष्ठी" इत्यमरोक्तेः परिषच्छब्देनात्र सभामात्रं गृह्यते । ननु

"त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्म्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा ॥"

इति मनूक्तः सभाविशेषः, "अभिरूपभूयिष्ठा" इत्यनुपपन्नेः ।

कालस्य दासः कालिदासः "याकारौ स्त्रीकृतौ ह्रस्वौ क्वचित्" इति ह्रस्वः । अभिज्ञायते शकुन्तला आत्मन एव पत्नीति बुध्यते अनेनेति अभिज्ञानं स्वनामाङ्काङ्गुरीयकं तेन ज्ञाता शकुन्तला यत्र तत् । शाकपार्थिवादित्वान्मध्यपदलोपी समासः । शकुन्तेभ्यः पक्षिभ्यः ला रक्षा यस्याः सा शकुन्तला । धातूनामनेकार्थत्वात् " ला आदाने" इत्यस्य क्विपि रूपम् । तथा च महाभारते —

"निर्ज्जने तु वने यस्मात् शकुन्तैः परिरक्षिता ।
शकुन्तलेति नामास्याः कृतञ्चापि ततो मया ॥"

नामैव नामधेयम्, 'भाग-रूप नामभ्यो धेयम्' इति स्वार्थे धेयप्रत्ययः ।

'नाम कार्य्यं नाटकस्य गर्भितार्थप्रकाशकम् "

इति दर्पणोक्तेः, अङ्गुरीयकेण शकुन्तलावगमस्यैवात्र प्रधानरूपान्तत्वादस्य अभिज्ञानशकुन्तलमिति नाम कृतम् ।

'नाटकं ख्यातवृत्तं स्यात् पञ्चसन्धिसमन्वितम् ।'

इत्यादिकं नाटकलक्षणं साहित्यदर्पणे अनुसन्धेयम् ।

---

সাদিত্যের এই সভা ; ইহাতে বহুতর পণ্ডিত উপস্থিত আছেন । কালিদাসপ্রণীত নূতন অভিজ্ঞানশকুন্তলনামক নাটক দ্বারা এই সভার

नटी । सुविदिदप्पओअदाए अज्जस्स ण किम्पि परिहाइ-स्सदि । (च)

सूत्र । सस्मितम् । आर्य्ये ! कथयामि ते भूतार्थम् । (छ)

---

(च) सुविदितप्रयोगतया आर्य्यस्य न किमपि परिहास्यते ।

---

(च) नटीति । सुविदितः सम्यक् शिक्षितः प्रयोगः अभिनयव्यापारो येन तस्य भावस्तया हेतुना, आर्य्यस्य भवतः, किमपि कोऽपि विषयः, न परिहास्यते न परिहीनं भविष्यति स्खलितं न भविष्यतीत्यर्थः । अतएव अभिनयेन सभ्यसन्तोषोत्पादने प्रत्येकपात्रं प्रति मम यत्नाधाने विशेषप्रयोजनं नास्तीति भावः ।

अत्र प्रधानाभिनयकर्त्तुः सूत्रधारस्य प्रशंसाकरणेन सभ्यानामुन्मुखीकरणात् प्ररोचना नाम भारतीवृत्तेरङ्गम् । यथा दर्पणे—

'उन्मुखीकारः प्रशंसातः प्ररोचना ।

(छ) सूत्रेति । ममाभिनयशिक्षां प्रति उत्कृष्टतया नट्या दृढविश्वासो नोचित इत्येतत्सूचनार्थं स्मितम् ईषद्धास्यं तेन सहेति सस्मितम् । ते तव समीपे, भूतार्थं सत्यविषयम् ।

---

সভ্যদিগকে আমরা সন্তুষ্ট করিব ; অতএব তুমি প্রত্যেক অভিনেতার প্রতি যত্ন কর ।

নটী। আপনি অভিনয়কার্য্যটী সম্যক্‌রূপে শিক্ষা করিয়াছেন বলিয়া, আপনার কোন বিষয়েই ত্রুটি হইবে না ।

সূত্রধার। (ঈষৎ হাস্যের সহিত) আর্য্যে ! তোমার নিকট যথার্থ বিষয় বলিতেছি ।

आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः ॥२॥

नटी। सविनयम्। एव्वस्सेदं। अणन्तरकरणिज्जं दाणिं अज्जो आणवेदु। (ज)

(ज) एवमेतत्। अनन्तरकरणीयमिदानीम् आर्य्य आज्ञापयतु।

"मून' सत्यौपम्नयोः." इत्यादि हेमः।

आपरितोषादिति। विदुषां विज्ञानाम्, आपरितोषात् स्वकीयव्यापारेण सन्तोषोत्पत्तिपर्य्यन्तम्, प्रयोगस्य अभिनयादिव्यापारस्य विज्ञानं विशेषाभिज्ञताम्, साधु उत्कृष्टमेव स्थितम्, इति न मन्ये। कथमेतदित्याह बलवदित्यादि। बलवत् अत्यन्तम्, शिक्षितानामपि, मादृशेषु अल्पशिक्षितेषु का कथा, अशेषकलाविदामपि जनानाम्, चेतः चित्तम्, आत्मनि स्वविषये, अप्रत्ययम् अविश्वस्तम्। तथा च महाशिक्षिता अपि जनाः स्वव्यापारेण लोकानां सन्तोषोत्पत्तेः प्राक् आत्मशिक्षा उत्कृष्टेति निश्चेतुमर्हन्ति, तस्मादृशेषु अल्पशिक्षितेषु का कथा। सुतराञ्च मां प्रति सुविज्ञैरित्यादि-सूचितस्तव विश्वासः कथमपि नोचित इति भावः।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः आर्य्यापथ्या छन्दश्चैव।

"बलवत् सुष्ठु, किमुत स्वत्यतीव च निर्भरे।" इत्यमरः।

आर्य्या आदिः "यस्याः पादे प्रथमे द्वादशमात्रास्तथा तृतीयेऽपि।
अष्टादश द्वितीये चतुर्थके पञ्चदश सार्य्या।"

इति लक्षणात् ॥२॥

পণ্ডিতগণের সন্তোষ হওয়া পর্য্যন্ত, অভিনয়জ্ঞান উৎকৃষ্ট বলিয়া মনে করি না। কারণ, অত্যন্তশিক্ষিত ব্যক্তিদিগেরও, নিজের বিষয়ে চিত্ত অবিশ্বাসী হয় ॥২॥

सूत्र। आर्य्ये! किमन्यदस्याः परिषदः श्रुतिप्रमोदहेतो-र्गीतात् करणीयमस्ति। (झ)

नटी। अध कदमं उण उदुं अधिकरिअ गाइस्सं। (ञ)

सूत्र। आर्य्ये! नन्विममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम्। सम्प्रति हि (ट)

---

(ञ) अथ कतमं पुनः ऋतुम् अधिकृत्य गास्यामि।

---

(ज) नटीति। आत्मोत्कर्षानौचित्यस्य प्रतिपन्नत्वात् अप्रतिभतया विनयः, तेन सहेति सविनयम्। एतत् त्वयोक्तम्, एवमित्थं सत्यमेवेत्यर्थः। अनन्तरकरणीयम् इतः परं कर्त्तव्यम्।

(झ) सूत्रेति। परिषदः सभायाः, श्रुतिप्रमोदहेतोः श्रवणसुखजनकात्, गीतात् अन्यत् किं करणीयमस्ति?। तद् गीतमेव क्रियतामित्याशयः।

(ञ) नटीति। अथेति प्रश्ने। कतमं बहूनां मध्ये कम्। अधिकृत्य आश्रित्य, गास्यामि गानं करिष्यामि?।

(ट) सूत्रेति। नन्वित्यनुनये। अचिरप्रवृत्तम् अबहुपूर्वोपस्थितम्, उपभोगक्षमं सम्भोगयोग्यम्। हि तथाहि।

---

নটী। (বিনয়ের সহিত) ইহা এই রূপই বটে। এখন আপনি পর-কর্ত্তব্য আদেশ করুন।

সূত্রধার। আর্য্যে! এই সভার শ্রবণানন্দজনক গান্ ভিন্ন আর কি কর্ত্তব্য আছে?।

নটী। কোন্ ঋতু অবলম্বন করিয়া গান করিব?।

সুভগসলিলাবগাহাঃ পাটলসংসর্গসুরভিবনবাতাঃ ।
প্রচ্ছায়সুলভনিদ্রা দিবসাঃ পরিণামরমণীয়াঃ ॥৩॥

নটী । তহ । ইতি গায়তি । (ঠ)

---

(ঠ) তথা ।

---

সুভগেতি । সুভগা অত্যন্তাপনিবর্তকত্বাৎ মনোহরাঃ, সলিলেষু জলেষু অবগাহাঃ অবগাহনং যেষু তে; পাটলানাং তদাখ্যকুসুমানাং সংসর্গেণ স্পর্শেন সুরভিঃ সুগন্ধিঃ বনবাতো বন্যবায়ুর্যেষু তে; প্রকৃষ্টা ছায়া যস্মিন্ তাদৃশে স্থানে সুলভা অনায়াসলভ্যা নিদ্রা যেষু তে তথা পরিণামে অবসানে রমণীয়া বিহরণাদৌ মনোহরাঃ, দিবসা বর্তন্তে ইতি শেষঃ । তৈর্নগরবর্ণনমনুচিতমেব ভবেদিতি ভাবঃ ।

অত্র দিবসানাং গানেন বর্ণনীয়তাপ্রতিপাদনং প্রতি সুভগসলিলাবগাহত্বাদিবহু-কারণানামুপন্যাসাৎ সমুচ্চয়োঽলঙ্কারঃ ।

'ঋতুঞ্চ কঞ্চিৎ প্রায়েণ ভারতীং বৃত্তিমাশ্রিতঃ ।'

ইত্যুক্তেরত্র গ্রীষ্মস্য ঋতোঃ কীর্তনম্ ।

আর্য্যা জাতিঃ ॥৩॥

(ঠ) নটীতি । তথা তদেব করোমীত্যর্থঃ ।

---

সূত্রধার । আর্য্যে ! অচিরোপস্থিত এবং সম্ভোগযোগ্য এই গ্রীষ্ম-কাল অবলম্বন করিয়াই গান কর। কারণ এখন—

জলে অবগাহন করা বড়ই মনোহর; পাটলপুষ্পের সংসর্গে বনের বায়ু সুগন্ধি; ছায়াতে অনায়াসেই নিদ্রা লাভ করা যায় এবং দিনগুলি শেষ বেলায় বড়ই মনোহর হয় ।৩॥

নটী । তাহাই । (এই বলিয়া গাইতে লাগিল)

ईसीसिचुम्बिआइं भमरेहिं उह सुउमारकेसरसिहाइं।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइं॥४॥

---

(४) ईषदीषच्चुम्बितानि भ्रमरैः ऊह सुकुमारकेसरशिखानि।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि ॥

---

ईषदिति। दयमानाः कोमलभावेन यत्नवात् सदयाः, प्रमदास्तरुण्यः, भ्रमरैः क्षणेन उत्सवेन सौरभातिशयादानन्देनेत्यर्थः चुम्बितानि मुखेन स्पृष्टानि; तथा सुकुमाराः कोमलाः केसराणां किञ्जल्कानां शिखा अग्रभागा येषां तानि; शिरीष-कुसुमानि शिरीषाख्यपुष्पाणि; अवतंसयन्ति शिरोभूषणीकुर्वन्ति। इति त्वम् ऊह वितर्कय पर्यालोचयेत्यर्थः। शिरीषकुसुमानां ग्रीष्मे प्रकाशादिदं ग्रीष्मसमयाधि-कारेण गानमित्यवधेयम्।

'निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षणः' इत्यमरः।

'अवतंसोऽस्त्रियां स्यात् कर्णपूरे च शेखरे' इति मेदिनी।

उद्गाथा नाम गीतिरियम्। तथा च पिङ्गले—

'पुव्वद्धे उत्तद्धे मत्ता तीस त्ति सुभअ! संभणिआ।
सो उग्गाही वुत्तो पिङ्गलकइ-दिट्ठ-सट्ठि-मत्तङ्गो॥'

अस्यानुवादो यथा—

पूर्वार्द्धे उत्तरार्द्धे मात्रास्त्रिंशदिति सुभग! संभणिताः।
सा उद्गाथा उक्ता पिङ्गलकविदृष्टः-षष्टिमात्राङ्गाः॥४॥

---

ভ্রমরগণ আনন্দে যে গুলিকে স্পর্শ করিতেছে এবং যে গুলির উপরি ভাগ কোমল, রমণীগণ আদরের সহিত সেই শিরীষপুষ্পগুলিকে মস্তকের ভূষণ করিতেছে ॥৪॥

सूत्र। आर्य्ये! साधु गीतम्। अहो! रागापहृत-चित्तवृत्तिरालिखित इव विभाति सर्वतो रङ्गः। तदिदानीं कतमं प्रयोगमाश्रित्यैनमाराधयामः ?। (ड)

नटी। णं पढमं ज्जेव अज्जेण आणत्तं अहिण्णाणसउन्तलं णाम अउव्वं णाडअं अहिणीअदु त्ति। (ढ)

---

(ढ) ननु प्रथममेव आर्य्येण आज्ञप्तम् अभिज्ञानशकुन्तलं नाम अपूर्व्वं नाटकम् अभिनीयतामिति।

---

(ड) सूत्रेति। साधु उत्कृष्टम्। तदुत्कर्षं कार्य्यमेव दर्शयति अहो इति। अहो आश्चर्य्ये। रङ्गो रङ्गस्थलोकगणः, रागेण गानस्वरेण अपहृता आकृष्य नीता चित्तवृत्तिर्यस्य स तादृशः सन्, सर्वतः समन्ततः, आलिखितश्चित्रित इव विभाति। अत एवेदं साध्वेव गीतमिति भावः। तत् तस्मात्, कतमं बहूनां मध्ये कम्, प्रयुज्यत इति प्रयोगो नाटकादिस्तम्। एनं रङ्गम्, आराधयामः सन्तोषयामः।

(ढ) नटीति। नन्विति सम्बोधने। आर्य्येण भवता, आज्ञप्तम् "अद्याभि-ज्ञानशकुन्तलनामधेयेन नाटकेनोपस्थापयितव्यमस्माभिः" इत्यनेन पूर्ववाक्येन भवद्भिरेवद्गीतमाध्यमाज्ञप्तमित्यर्थः। अपूर्वं नूतनम् आश्चर्य्यमिति च अस्माभिः अभिनीयतामस्माभिरिति शेषः। इति हेतोः पुनः प्रश्नो नोपपद्यते इत्याशयः।

---

সূত্রধার। আর্য্যে! ভাল গান করিয়াছ। কি আশ্চর্য্য! গানের স্বর হৃদয় অপহরণ করিয়াছে, তাই রঙ্গালয়স্থ লোকসকল, সকল দিকেই যেন চিত্রিত হইয়া রহিয়াছেন। তা এখন কোন্ নাটক অবলম্বন করিয়া ইহাদিগকে সন্তুষ্ট করি?

নটী। আপনি ত প্রথমেই বলিয়াছেন যে, অভিজ্ঞানশকুন্তল-নামক অপূর্ব্ব নাটক অভিনয় করিব।

सूत्र। आर्य्ये! सम्यगनुबोधितोऽस्मि। अस्मिन् क्षणे खलु विस्मृतं मया तत्। कुतः— (ण)

तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्मन्तः सारङ्गेणातिरंहसा ॥५॥

इति निष्क्रान्तौ। (त)

## प्रस्तावना ॥०॥ (थ)

---

(ण) सूत्रेति। अनुबोधितः त्वया स्मारितः कुतः कारणाद्विस्मृतमित्यर्थः। तत्कारणमाह तवेति। अतिरंहसा अत्यन्तवेगशालिना, सारङ्गेण हरिणेन, एष दृश्यमानः राजा दुष्मन्त इव; हारिणा मनोहरेण, तव गीतरागेण गानस्वरेण, प्रसभं बलात् हृत आकृष्टचित्तः दूरं नीतश्च अस्मि। अतएव अवधारितविषयविस्मृतिर्जातेति भावः।

अत्र श्रौती उपमालङ्कारः।

"सारङ्गः पुंसि हरिणे चातके च मतङ्गजे। शवले त्रिषु॥" इति मेदिनी।

पथ्यावक्त्रं वृत्तम् "युजोर्जेन सरिद्भर्तुः पथ्यावक्त्रं प्रकीर्त्तितम्।" इति लक्षणात् ॥५॥

(त) इतीति। निष्क्रान्तौ निर्गतौ रङ्गभूमितो नटीनटाविति शेषः।

(थ) प्र इति। प्रस्तावयति अभिप्रेतविषयम् उत्थापयति या सा प्रस्तावना। तथा चाहुः साहित्यदर्पणे—

---

সূত্রধার। আর্য্যে! ঠিক স্মরণ করাইয়া দিয়াছ। আমি এইক্ষণে ইহা বিস্মৃত হইয়াছিলাম। কারণ,—

অত্যন্ত বেগবান্ হরিণ যেমন, এই রাজা দুষ্মন্তকে আকর্ষণ করিয়া লইয়া যাইতেছে, সেই রূপ তোমার মনোহর গানরাগ আমাকে বলপূর্ব্বক আকর্ষণ করিয়াছিল ॥৫॥

"नटी विदूषको वापि पारिपार्श्विक एव वा ।
सूत्रधारेण सहिताः संलापं यत्र कुर्वते ॥
चित्रैर्वाक्यैः स्वकार्य्योत्थैः प्रस्तुताक्षेपिभिर्मिथः ।
आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावनापि सा ॥"

अत्र सादृश्योपन्यासेन दुष्यन्तप्रवेशरूपान्यकार्य्यप्रसाधनादियम् अवलगिताख्या प्रस्तावना । यथा तत्रैव—

"यत्रैकत्र समावेशात् कार्य्यमन्यत् प्रसाध्यते ।
प्रयोगे खलु तज्ज्ञेयं नाम्नावलगितं बुधैः ॥"

एतल्लक्षणे इदमेव चोदाहृतं दर्पणकारेण ।

---

(ইহার পর উভয়ে চলিয়া গেল)

প্রস্তাবনা ।

# प्रथमोऽङ्कः।

ततः प्रविशति रथारूढः सशरचापहस्तो मृगमनुसरन् राजा सूतश्च [१]। [द]

(द) तत इति। शरेण बाणेन सहितेति सशरं चापं धनुर्हस्ते यस्य सः, मृगं कञ्चित् हरिणम्, अनुसरन् अनुधावन्, राजा दुष्मन्तः, सूतश्च तस्य सारथिः प्रविशतीत्यन्वयः। 'सूतः क्षत्ता च सारथिः' इत्यमरः।

इत प्रभृति प्रथमाङ्कसमाप्तिपर्य्यन्तो मुखसन्धिः। तथा चात्र 'वयं तत्त्वान्वेषान्मधुकर! हतास्त्वं खलु कृती' इत्यादिना शकुन्तलाप्राप्तौ राज्ञ औत्सुक्यात् "कथं इमं प्रेक्ष्य तपोविरोधिनो विकारस्य गमनीयास्मि संवृत्ता" इत्यादिना च राजप्राप्तौ शकुन्तलाया औत्सुक्यात् आरम्भो नाम प्राथमिकी कार्य्यावस्था निबद्धा यथा दर्पणे—

'भवेदारम्भ औत्सुक्यं यन्मुख्यफलसिद्धये।'

तथा अनसूयाप्रियंवदाभ्यां परिपोषितः शकुन्तलादुष्मन्तयोः परस्परानुरागो बीजं नाम अर्थप्रकृतिः। तथा च तत्रैव—

'अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति।
फलस्य प्रथमो हेतुर्बीजं तदभिधीयते॥'

তদনন্তর শরসমন্বিত-ধনু হস্তে, হরিণের অনুসরণ করিতে করিতে রাজা দুষ্মন্ত ও সারথি, রথে আরোহণ করিয়া প্রবেশ করিলেন।

(१) ततः प्रविशति मृगानुसारी सशरचापहस्तो राजा रथेन सूतश्च।

सूतः। राजानं मृगञ्चावलोक्य। आयुष्मन्! [घ]

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्मुके।
मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम्॥६॥

---

तथा 'यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा।
प्रारब्धे च समायुक्ता तन्मुखं परिकीर्तितम्॥"

अत्र च उपक्षेपादीनि द्वादशाङ्गानि यथास्थानं निवेश्य लक्षणानि वक्ष्यामः।

(घ) सूत इति। आयुष्मन् प्रशस्तायुःशालिन्!।

'आयुष्मन् रथिनं सूतः" इति दर्पणोक्तेः आयुष्मन्निति सम्बोधनम्। 'पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्" इति नाट्यनियमात् सूतस्य अनीचत्वेन शिक्षितत्वेन च संस्कृतं भाषा। एवं राज्ञोऽपि।

कृष्णेति। कृष्णसारे पलायमाने हरिणविशेषे, अधि अधिरोपिता ज्या गुणो यस्मिन् तदधिज्यं कार्मुकं धनुर्यस्य तस्मिन् त्वयि दुष्मन्ते च, चक्षुः ददत् अर्पयन्, अहम् मृगं मृगरूपधारिणं यज्ञम् अनुसरति अनुधावतीति तम्, साक्षात् प्रत्यक्षम्, पिनाकिनं पिनाकधनुर्धारिणं महादेवमिव पश्यामि।

अत्र पिनाकिनः साक्षात्त्वाभावेऽपि तत्सम्भावनावशात् भावाभिमानिनी उत्प्रेक्षेयं वा अलङ्कारः।

क्रतुनाशकाले पिनाकिनमवलोक्य दक्षयज्ञो मृगरूपमवलम्ब्य पलायाञ्चक्रे; पिनाकी च तमनुसृतवानिति पौराणिकवृत्तान्तः॥६॥

---

সারথি। (রাজা ও হরিণের প্রতি দৃষ্টিপাত করিয়া) আয়ুষ্মন্! হরিণের প্রতি এবং গুণারোপিত-ধনুর্দ্ধারী আপনার প্রতি দৃষ্টিপাত করতঃ, হরিণরূপী যজ্ঞের অনুসরণকারী পিনাকধনুর্দ্ধারী সাক্ষাৎ মহাদেবকে যেন দেখিতেছি ॥৬॥

राजा । सूत ! दूरममुना सारङ्गेण वयमाकृष्टाः । सोऽय-मिदानीमपि (१) । (ग)

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम् ।
शष्पैरर्द्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा (२)
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति ॥७॥

---

(ग) राजेति । सारङ्गेण हरिणेन । आकृष्टा आकृष्य आनीताः । सोऽयं सारङ्गः, इदानीमपि अस्माभिः पश्चाद्धावनेऽपि, प्रयातीति श्लोकस्थेनान्वयः ।

ग्रीवेति । अनुपतति पश्चात् धावति, स्यन्दने अस्मदीयरथे अस्मदीयं रथं प्रतीत्यर्थः, ग्रीवायाः कन्धराया भङ्गेन पश्चाद्दिशि परिवर्त्तनेन अभिरामं सुन्दरं यथा स्यात्तथा, मुहुर्वारं वारं दत्ता अर्पिता दृष्टिर्येन सः, शरस्य सन्निहितबाणस्य पतन-भयात् स्वगात्रपातभीतेर्हेतोः, भूयसा अधिकेन, पश्चार्द्धेन शरीरस्य पश्चाद्भागेन, पूर्वकायं शरीरस्य पूर्वार्द्धं प्रविष्टः, सम्पुटस्थपदद्वयाभ्यन्तरे प्रवेशितदेहपश्चाद्भाग इत्यर्थः, श्रमेण द्रुतगमनायासेन विवृतात् प्रकटितात् मुखात् भ्रंशिभिः स्खलद्भिः पतन-शीलैः, अर्द्धावलीढैः अर्द्धभुक्तैः, शष्पैः बालतृणैः, कीर्णं व्याप्तं वर्त्म गमनपथो

---

রাজা। সারথি ! এই হরিণ আমাদিগকে দূরে আকর্ষণ করিয়া আনিয়াছে। এখনও এই সেই হরিণ—

গ্রীবা পরিবর্ত্তিত করিয়া পশ্চাৎগামী রথের প্রতি, বার বার সুন্দর দৃষ্টিপাত করিতেছে; বাণ পড়িবার ভয়ে, শরীরের পশ্চাদ্ভাগ দ্বারা সম্মুখভাগের অভ্যন্তরে অধিকভাবে প্রবেশ করিতেছে; পরিশ্রমে মুখমণ্ডল প্রকটিত হইয়া যাইতেছে; তাহাতে সেই মুখ হইতে পতিত

---

(१) अयं पुनरिदानीमपि ।

(२) दर्भैरर्द्धावलीढैः ।

सविस्मयम् । (१) कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तोऽयं मृगः । [प]

---

यस्य सः, उदग्रम् ऊर्द्ध्वं प्लुतं लम्फनं यस्य तस्य भावस्तस्मात्, वियति आकाशे, बहुतरं सातिशयम्, उर्व्व्यां भूमौ च, स्तोकम् अल्पम्, प्रयाति गच्छति, पलायमानः खल्वयं मृगः उल्लम्फनातिशयेन आकाश एव अधिकं तिष्ठति भूमौ चाल्पमिति भावः । इति त्वं पश्य ।

अत्र यथावद्वस्तुवर्णनात् स्वभावोक्तिरलङ्कारः । उर्व्व्यामित्यत्र च दकारवर्णतया श्रुतिदुःखावहत्वात् दुःश्रवत्वदोषः, तथा उर्व्व्यामित्यतः परं समुच्चयार्थकश्चकारः अवश्यं वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानदोषश्च । 'याति भूमौ च किञ्चित्" इति पाठे तु तयोः समाधानम् ।

"बले रामौ नीलचारुसिते त्विषु" इति । 'शताङ्गः स्यन्दनो रथः" इति 'शष्प' बालतृणम् " इति च अमरः । "

पश्चाद्देशमिति पश्चार्द्धम्, पृषोदरादित्वात् साधुः ।

स्रग्धरा वृत्तम् ॥७॥

(प) सविस्मयमिति । अयं मृगः, अनुपतत एव पश्चाद्धावत एव मे मम, कथं प्रयत्नेन दूरगतत्वात् कष्टेन प्रेक्षणीयो द्रष्टव्यः संवृत्तो जातः । एतेन रथस्य सातिशयवेगं सम्पादयितुमशक्ततया सूतस्य निन्दा आक्षिप्यते ।

---

অর্দ্ধভুক্ত নূতন তৃণ দ্বারা পথ ব্যাপ্ত করিতেছে; এই অবস্থায় অত্যন্ত উল্লম্ফন করায় আকাশেই অধিক গমন করিতেছে, কিন্তু ভূতলে অল্পই যাইতেছে;—দেখ ॥৭॥

(বিস্ময়ের সহিত) পিছনে পিছনে যাইতে যাইতেই এই হরিণ, আমার যত্নপূর্ব্বক দর্শনের যোগ্য হইয়া দাঁড়াইল কেন ! ।

---

(১) তদেব কথমনুপতত এব মে প্রযত্নপ্রেক্ষণীয়ঃ সংবৃত্তঃ ।

सूतः । उद्घातिनी भूमिरिति रश्मिसंयमनात् रथस्य मन्दीभूतो वेगः ; तेन एष मृगो विप्रकृष्टः संवृत्तः । सम्प्रति हि समदेशवर्त्तीन ते दुरासदो भविष्यति (१) । [फ]

राजा । तेन हि मुच्यन्तामभीषवः । (ब)

सूत । यथाज्ञापयत्यायुष्मान् । इति भूयो रथवेगं रूपयित्वा ।
आयुष्मन् ! पश्य पश्य । एते हि--- [२] (भ)

---

(फ) अनः सूतं स्वदोषं परिहरति सूत इति । उद्घातयति स्खलनं जनयतीति उद्घातिनी उन्नतावनता । इति हेतोः, रश्मे रश्वरज्ज्वोः संयमनादाकर्षणात् । विप्रकृष्टो दूरवर्त्ती । दुरासदो दुर्लभः, अयं मृग इति शेषः ।

(ब) राजेति । तेन हि समदेशवर्त्तित्वेन तेन हेतुना, अभीषवः प्रग्रहा अश्वरज्जव इति यावत्, मुच्यन्तां लम्बीकरणाय हस्तात् त्यज्यन्ताम् ।

"अभीषुः प्रग्रहे रश्मौ" इत्यमरः ।

(भ) सूत इति । एत इति श्लोकस्थवाजिन इत्यस्य विशेषणम् । हि तथाहि ।

---

সারথি । স্থানগুলি উচু নীচু ছিল বলিয়া, দড়ি টানিয়া ধরায় রথের বেগ কমিয়া গিয়াছিল ; তাহাতেই এই হরিণ দূরবর্ত্তী হইয়া পড়িয়াছিল । এখন সমান জায়গায় রহিয়াছে, সুতরাং আপনার দুষ্প্রাপ্য হইবে না ।

রাজা । তাহা হইলে দড়ি ছাড়িয়া দাও ।

সারথি । আয়ুষ্মান্ যেমন আদেশ করেন । (এই বলিয়া সাতিশয় রথের বেগ জন্মাইয়া ) আয়ুষ্মন্ ! দেখুন দেখুন ।

---

(१) आयुष्मन् ! उद्घातिनी भूमिरिति मया रश्मिसंयमनात् रथस्य मन्दीकृतो वेगः । तेन मृग एष विप्रकृष्टान्तरः । सम्प्रति समदेशवर्त्तिनस्ते न दुरासदो भविष्यति ।

(२) सूतः ।...रथवेगं निरूप्य ।आयुष्मन्। पश्य पश्य ।

मुक्तेषु रश्मिषु निरायतपूर्वकायाः
स्वेषामपि प्रसरतां रजसामलङ्घ्याः ।
निष्कम्पचामरशिखाश्च्युतकर्णभङ्गाः
धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते (१) ॥८॥

---

मुक्तेष्विति । रश्मिषु अश्वरज्जुषु, मुक्तेषु सत्सु, निर्गं विगतम् आयता दीर्घा येभ्य इति निरायता अतोऽवदीर्घाः पूर्वकाया देहपुरोभागा येषां ते; प्रसरतां पृष्ठगत-वायुवेगेन सम्मुखे प्रचलताम्, स्वेषामपि स्वस्वखुरोत्थापितानामपि, रजसां धूलीनाम्, अलङ्घ्या लङ्घयितुमतिक्रमितुमशक्याः, निष्कम्पा निश्चलाः चामराणां गलबद्धशिरोलोम्नां शिखा अग्रदेशा येषाम् ते, तथा च्युता नष्टाः कर्णयोर्भङ्गा अवनमनानि येषां ते तथोक्ताः, ते तव वाजिनः अश्वाः, वर्त्मनि गन्तव्यपथे धावन्ति वेगेन गच्छन्ति, तरन्ति नु आकाशे प्लवन्ते किम्? । अन्यथा ईदृशवेगासम्भव इति भावः ।

अत्रापि पूर्ववत् स्वभावोक्तिः, धावने तरणस्य संशयात् सन्देह इव अनयोर्मिथो निरपेक्षतया संसृष्टिः । तथा उक्तविधसमासाश्रयणात् निरायतपदेन किम् अतिदीर्घः, उत निर्गतादिवत् आयतत्वाभावविशिष्टो बोद्धव्य इति सन्देहात् सन्दिग्धतादोषः, स तु 'अत्यायतपूर्वकायाः' इति पाठेन परिहार्यः ।

वसन्ततिलका वृत्तम्—"उक्ता वसन्ततिलका तभजा जगौ गः" इति लक्षणात् ॥८॥

---

দড়ি ছাড়িয়া দিলে পর, যাহাদের দেহের পূর্ব্বার্দ্ধ অত্যন্ত দীর্ঘ হইয়াছে; আপনাদের খুরোত্থাপিত সম্মুখগামী ধূলিও, যাহাদিগকে লঙ্ঘন করিতে পারিতেছে না এবং যাহাদের চামরের অগ্রভাগ নিশ্চল হইয়াছে, আর কর্ণের বক্রতা নিবৃত্তি পাইয়াছে; সেইরূপ আপনার এই অশ্বগণ, পথে ধাবিত হইতেছে, না,—সন্তরণ করিতেছে? ॥৮॥

---

(१) मुक्तेषु रश्मिषु निरायतपूर्वकायाः निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः ।
आत्मोद्धतैरपि रजोभिरलङ्घनीया धावन्त्यमी मृगजवाक्षमयेव रथ्याः ॥

राजा । सहर्षम् । नूनमतीत्य हरिणं हरयो वर्त्तन्ते । यतः [१] (म)

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।
प्रकृत्या यद्वक्रं तदपि समरेखं नयनयोः
न मे दूरे किञ्चित् क्षणमपि न पार्श्वे रथजवात् (२)॥८॥

---

(म) राजेति । ईप्सितहरिणप्राप्तिसम्भावनया हर्षः । हरयो मदीयघोटकाः, हरिणमतीत्य वेगातिशयादतिक्रम्य, वर्त्तन्ते वर्त्तिष्यन्त इति भविष्यत्सामीप्ये वर्त्तमाना इति नूनं तर्कः सामीप्यं च । "नूनं तर्केऽर्थनिश्चये" इत्यमरः ।

यदिति । रथस्य जवात्, वेगात् यत् वस्तु, आलोके दूरतो दर्शने सूक्ष्मं स्वल्पमासीत्, सहसा तत्क्षणादेव, तत् वस्तु विपुलतां विशालताम्, व्रजति प्राप्नोति । इदं सम्मुखदूरस्थ-विषयम् । यत् वनादिकं वस्तु, अर्द्धे मध्यत एव, विच्छिन्नं विभक्तम्, तत् वस्तु, कृत-सन्धानमिव कृतसंयोगमिव भवति । इदं पार्श्वस्थविषयम् । यत् वनस्थलादिकम्, प्रकृत्या स्वभावेनैव वक्रं कुटिलम्, तदपि वस्तु, समा रेखा यस्य तत् तादृशम् भवति । इदमपि पार्श्वस्थविषयम् । तथा किञ्चित् किमपि वस्तु, मे मम नयनयोश्चक्षुषोः, क्षणम् अपि न दूरे तिष्ठति सहसैव सन्निहितत्वादिति भावः, न वा पार्श्वे तिष्ठति, सहसैव दूरपश्चाद्गतत्वादित्याशयः ।

---

রাজা । (আনন্দের সহিত) নিশ্চয় ঘোড়াগুলি, হরিণটাকে অতি-ক্রম করিয়া যাইবে । কারণ—

যাহা দৃষ্টিপথে সূক্ষ্ম ছিল, রথের বেগে সহসাই তাহা বিস্তৃতি লাভ

---

(१) सम्प्रत्यतीत्य हरिणौ हरीव वर्त्तन्ते वाजिनः । तथाहि ।

(२) [illegible], यदर्द्धे विच्छिन्नम् । न मे पार्श्वे किञ्चित् क्षणमपि न दूरे रथजवात् ।

सूतः । पश्यैनं व्यापाद्यम् । (य)

राजा । शरसन्धानं नाटयति (१) । (र)

नेपथ्ये । भो भो राजन् ! आश्रममृगोऽयं न हन्तव्यो न हन्तव्यः ! (ल)

---

अत्र शरसन्धानमिवेति भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः। तथा चतुर्थपादे समुच्चयार्थं चकारो वाकारो वा वक्तव्यः, किन्तु नोक्त इति वाच्यानभिधानदोषः। स तु 'न दूरे किञ्चित्क्षणमपि न पार्श्वे रथजवात्' इति पाठेन समाधेयः। "तत्र त्वराजवौ वेगः" इत्यमरः।

एतदनुरूपोक्तिर्यथा भट्टिकाव्ये—

"अथ पुरुजवयोगाद्विदधद्दूरदूरं दवयदतिरयेण प्राप्तमुर्वीविभागम् ।"

शिखरिणी वृत्तम् "रसैः रुद्रैश्छिन्ना यमनसभला गः शिखरिणी" इति लक्षणात् ॥८॥

(य) सूत इति । व्यापाद्यं हन्तव्यम्, हरिणमिति शेषः ।

(र) राजेति । नाटयति अभिनयति । हरिणं हन्तुमिति भावः ।

(ल) नेपथ्य इति । सप्तमी विभक्तिः । अत्र हिंसानिषेधाद्दयाश्रयः ।

---

করিতেছে ; যাহা বাস্তবিকই বিভক্ত, তাহা যেন সংযুক্ত হইতেছে, যাহা স্বভাবতই বক্র, তাহাও সমরেখ বলিয়া বোধ হইতেছে এবং ক্ষণকালের জন্যও কোন বস্তুই আমার নয়নের দূরে কিম্বা পার্শ্বে থাকিতেছে না ।৮॥

সারথি । এই বধ্য হরিণটাকে দেখুন ।

রাজা । (বাণ-সন্ধান অভিনয় করিলেন )

নেপথ্যে । হে হে রাজন্ ! এটা আশ্রমের হরিণ , মারিবেন না মারিবেন না ।

---

(१) मूल ! पश्यैनं व्यापाद्यमानम् । (शरसन्धानं नाटयति )

সূতঃ। আকর্ণ্য অবলোক্য চ। আয়ুষ্মন্! অস্য খলু তে বাণপাতপথবর্ত্তিনঃ কৃষ্ণসারস্যান্তরায়ৌ তপস্বিনৌ সংবৃত্তৌ (১) (ক)।

রাজা। সসম্ভ্রমম্। প্রগৃহ্যন্তামভীষবঃ (২)। (খ)

সূতঃ। যথাজ্ঞাপয়ত্যায়ুষ্মান্। ইতি তথা করোতি। (৩)

ততঃ প্রবিশতি সশিষ্যো বৈখানসঃ। (গ)

বৈখা। হস্তমুদ্যম্য। রাজন্! (৪) আশ্রমমৃগোঽয়ং ন হন্তব্যো ন হন্তব্যঃ। (ঘ)

---

(ক) সূত ইতি। কৃষ্ণসারস্য কৃষ্ণসারহত্যায়াঃ, অন্তরায়ৌ নিবারকত্বেন বিঘ্নৌ, সংবৃত্তৌ জাতৌ।

(খ) রাজেতি। সসম্ভ্রমং সত্বরম্ প্রগৃহ্যন্তাম্ আকৃষ্য ধ্রিয়ন্তাম্, অভীষবঃ অশ্বরশ্ময়ঃ।

(গ) তত ইতি। বৈখানসঃ কশ্চিত্তপস্বী।

---

সারথি। (শুনিয়া এবং দেখিয়া) আয়ুষ্মন্! দুইজন তপস্বী, আপনার বাণক্ষেপের পথবর্ত্তী এই হরিণটার বিঘ্নস্বরূপ হইয়াছেন।

রাজা। (ত্বরার সহিত) অশ্বরজ্জু আকর্ষণ কর।

সারথি। আয়ুষ্মান্ যেমন আদেশ করেন। (এই বলিয়া অশ্বরজ্জু আকর্ষণ করিল)

তাহার পর শিষ্যের সহিত একজন তপস্বীর প্রবেশ।

---

(১) সূতঃ।...তে বাণপথবর্ত্তিনঃ কৃষ্ণসারস্যান্তরে তপস্বিন উপস্থিতাঃ।

(২) রাজা। (সসম্ভ্রমম্)। তেন হি নিগৃহ্যন্তাং বাজিনঃ।

(৩) সূতঃ। তথা। (রথং স্থাপয়তি)।

(৪) ভো ভো রাজন্!

न खलु न खलु बाणः सन्निपात्योऽयमस्मिन्
मृदुनि मृगशरीरे तूलराशाविवाग्निः ।
क्व बत हरिणकानां जीवितं चातिलोलं
क्व च निशितनिपाता वज्रसाराः शरास्ते ॥१०॥

---

"वैखानसो वनवासी वानप्रस्थश्च तापसः" इति वैजयन्ती ।

(ख) वैखेति । सुगमम् उक्तोक्ति ।

न खल्विति । तूलराशौ अग्निरिव, मृदुनि कोमले अस्मिन् मृगशरीरे अयं बाणः न खलु न खलु सन्निपात्यः नैव निक्षेप्यः । तत्र हेतुमाह बतेति । बत खेदे । अति-लोलं अत्यन्तचञ्चलं क्षणस्थायित्वेन विनश्वरत्वात् नितान्तचञ्चलम्, हरिणकानां क्षुद्रमृगाणाम्, जीवितं जीवनञ्च क्व कुत्र वर्त्तते ; निशिताः प्रखराः तीक्ष्णाग्राः निपाताः पातनानि येषां ते, तथा वज्रस्येव सारो बलं येषां ते, ते तव शराः बाणाश्च क्व कुत्र विद्यन्ते । आश्रमवनचारिणां पालितानां स्वप्रयोग इव क्षुद्रहरिणवधाय स्वकीयदारुणबाण-प्रहारो नितरामन्याय्यः 'समर्थेन लघुप्राणि गुरुप्रायस्त्वान्याय्यत्वम्' इति न्यायादित्याशयः ।

अत्र उत्तरार्द्धार्थरूपकारणेन पूर्वार्द्धार्थरूपकार्यस्य समर्थनेन अर्थान्तरन्यासः, कोमल-कठिनयोर्जीवितशरयोर्विरूपयोः सङ्घटनात् विषमालङ्कारः वज्रसारा इति लुप्तोपमा च इत्येतेषां सङ्कराङ्गिभावेन सङ्करः ; स च तूलराशाविवाग्निरिति श्रौतोपमया पुनः संसृज्यते । संसृष्टिसङ्करयोरपि पुनः संसृष्टिसङ्करौ सम्भवत इति प्रदर्शितमस्माभिः साहित्य-दर्पणटीकायाम् ।

"सारो बले स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु" इत्यमरः ।

---

তপস্বী । (হস্ত উত্তোলন করিয়া) হে হে রাজন্ ! এটা আশ্রমের হরিণ ; মারিবেন না মারিবেন না ।

তুলার রাশিতে অগ্নির ন্যায়, এই কোমল মৃগ-শরীরে এই বাণ নিক্ষেপ করিবেন না , করিবেন না । হায় ! ক্ষুদ্র হরিণগণের নিতান্ত

তদাশু কৃতসন্ধানং প্রতিসংহর সায়কম্।
আর্ত্তত্রাণায় বঃ শস্ত্রং ন প্রহর্ত্তুমনাগসি (১)॥ ১১॥

---

হরিণকানামিতি অল্পার্থে কপ্রত্যয়ঃ। নিপাত্যতে বিনাশ্যতে ক্ষিপ্যতে অনেনেতি নিপাতো ধারা। করণে ঘঞ্।

মালিনী বৃত্তম্ "ননমযযযুতেয়ং মালিনী ভোগিলোকৈঃ" ইতি লক্ষণাৎ॥১০॥

ননু তর্হি যেন কেনচিৎ সামান্যমৃগস্যৈব হরিণোঽয়ং ময়া নিহন্তব্য ইত্যাহ তদিতি তৎ তস্মাৎ আশ্রমমৃগত্বেনৈব অবধ্যত্বাৎ, কৃতং সন্ধানং জ্যায়ামুপরি পাতনং স্থিরকরণং যস্য তম্, সায়কম্ অমুং বাণম্, আশু শীঘ্রমেব, প্রতিসংহর নিবর্ত্তয়। তত্র কারণমাহ আর্ত্তেতি। বো যুষ্মাকং শস্ত্রম্, আর্ত্তস্য বিপন্নস্য প্রাণিনঃ ত্রাণায় রক্ষণায়ৈব প্রবর্ত্ততে, কিন্তু অনাগসি নিরপরাধে প্রাণিনি, প্রহর্ত্তুং ন প্রবর্ত্ততে, ত্রাণরক্ষণার্থমেব বিধাত্রা যুষ্মাকং সৃষ্টত্বাদিতি ভাবঃ।

অত্রাপি পূর্ববদেব কার্য্যকারণভাবে অর্থান্তরন্যাসোঽলঙ্কারঃ। তথা চ ত্রাণায়েতি চতুর্থ্যন্ত প্রত্যয়েন প্রক্রম্য প্রহর্ত্তুমিতি তুমুন্প্রত্যয়াভিধানাৎ ভগ্নপ্রক্রমতা দোষঃ। স চ 'ত্রাণায় বঃ শস্ত্রং ন প্রহর্ত্তুমনাগসম্' ইতি পাঠেন সমাধেয়ঃ। অত্র চ দ্বিতীয়ার্দ্ধস্য উক্তার্থত্বাৎ নিরর্থকত্বদোষোঽপি তত্র আর্ত্তমিতি দ্বিতীয়ামভিধায় অনাগসীতি সপ্তম্যভিধানাৎ পুনর্ভগ্নপ্রক্রমতা অপি ধ্যেয়ম্।

"আগোঽপরাধো মন্তুশ্চ" ইত্যমরঃ॥১১॥

---

চঞ্চল জীবনই বা কোথায়; আর বজ্রের ন্যায় বলবান্ ও সুধার আপনার বাণগুলিই বা কোথায় ॥১০॥

অতএব কৃতসন্ধান বাণটাকে শীঘ্র প্রতিসংহার করুন। কারণ, বিপন্নের পরিত্রাণের জন্যই আপনাদের অস্ত্র; কিন্তু নিরপরাধের উপরে প্রহার করিবার জন্য নহে ॥১১॥

---

(১) আর্ত্তত্রাণায় তে শস্ত্রম্।

राजा । सप्रणामम् । एष प्रतिसंहृत एव । इति यथोक्तं करोति (१) । (छ)

वैखा । सहर्षम् । सदृशमेवैतत् पुरुवंशप्रदीपस्य भवतः (२) । (ज)

जन्म यस्य पुरोर्वंशे युक्तरूपमिदं तव ।
पुत्रमेवं गुणोपेतं चक्रवर्त्तिनमाप्नुहि ॥१२॥

---

(छ) राजेति । प्रतिसंहृत एव निवर्त्तित एव । यथोक्तं करोति प्रतिसंहरतीत्यर्थः ।

(ज) वैखेति । पुरोर्ययातिकनिष्ठपुत्रस्य वंशे प्रदीपस्तदुज्ज्वलताकारकस्तस्य । सदृशमेव योग्यमेव ।

जन्मेति । पुरोस्तदाख्यस्य ययातिपुत्रस्य वंशे, यस्य तव जन्म, तस्य तव, इदम् अस्माकं निवारणमात्रेणैव संहितस्यापि बाणस्य प्रतिसंहरणम्, युक्तरूपं सर्वथैव उपयुक्तं जातम् । एतेन नितान्तं सन्तुष्टस्याशास्ते पुत्रमिति । एवं गुणोपेतम् ईदृशन्याय-विनयादिगुणशालिनम्, चक्रवर्त्तिनं सार्वभौमं पुत्रम्, आप्नुहि लभस्व ।

चक्रे भूमण्डले वर्त्तते अधीश्वरत्वेनावतिष्ठत इति चक्रवर्त्ती । "अग्निष्टोमयाजी पुत्रस्ते भविता" इत्यादिवत् "धातुसम्बन्धे प्रत्ययाः" इत्यनेन साधुत्वम् ।

"चक्रवर्त्ती सार्वभौमः" इत्यमरः । एतदनुरूपवाक्यं यथा रघुवंशे "भवन्तमीड्यं भवतः पितेव ।" ॥१४॥

---

রাজা । (প্রণামের সহিত] এই প্রতিসংহৃতই হইল । (এই বলিয়া প্রতিসংহার করিলেন ।

তপস্বী । (আনন্দের সহিত) আপনি পুরুবংশের প্রদীপ ; আপনার পক্ষে ইহা উপযুক্তই হইয়াছে ।

---

(१) राजा । एष प्रतिसंहृतः । यथोक्तं करोति ।

(२) वैखा । (सहर्षम्) उचितमेवैतत् पुरुवंशप्रभवस्य नरेन्द्रदीपस्य भवतः ।

इतरौऽपि। हस्तमुद्यम्य। सर्वथा चक्रवर्त्तिनं पुत्त्रमाप्नुहि (१)।(क)

राजा। सप्रणामम्। प्रतिगृहीतं ब्राह्मणवचः (२)।(ख)

वैखा। राजन्! समिदाहरणाय प्रस्थिता वयम्। एष चास्मद्गुरोः कण्वस्य कुलपतेः साधिदैवत एव शकुन्तलया अनुमालिनीतीरमाश्रमो दृश्यते। न चेदन्यकार्य्यातिपातस्तदत्र प्रविश्य प्रतिगृह्यतामतिथिसत्कारः (३)। अपि च [ग]

(क) इतरौऽपीति। शिष्योऽपीत्यर्थः। उद्यम्य उत्तोल्य। सर्वथा अवश्यम्।

(ख) राजेति। प्रतिगृहीतं सत्यतया स्वीकृतम्, ब्राह्मणोक्तत्वादेवेति भावः।

(ग) वैखेति। समिदाहरणाय यज्ञीयकाष्ठानयनाय। कुलपतेः शिष्यसमूहनियन्तुः अन्नदानादिपूर्वकमङ्गलरमुख्याध्यापकस्य, कण्वस्य तदाख्यस्य महर्षेः, आश्रम इति परेणान्वयः। शकुन्तलयैव साधिदैवतः अधिदैवतेन अधिष्ठातृजनेन सहेति सः शकुन्तलया अधिष्ठित इत्यर्थः, मालिन्यास्तदाख्याया नद्यास्तीरे इत्यनुमालिनीतीरम्। चेद् यदि अन्यस्य कार्य्यस्य अतिपातः अतिक्रम अतिरिक्ति य बत, न भवेत, तत् तदा।

পুরুবংশে যাঁহার জন্ম, সেই আপনার পক্ষে ইহা উপযুক্তই বটে। অতএব এইরূপ গুণসম্পন্ন সার্বভৌম পুত্র লাভ করুন ॥১২॥

অপর তপস্বীও। (হস্ত উত্তোলন করিয়া) অবশ্যই চক্রবর্ত্তী পুত্র লাভ করুন।

রাজা। (প্রণামপূর্ব্বক) ব্রাহ্মণের বাক্য (সত্য বলিয়া) স্বীকার করিলাম।

(१) क्वचित् अयं पाठो नास्ति।

(२) राजा। (सप्रणामम्) प्रतिगृहीतम्।

(३) वैखानसः।...एष खलु काश्यपस्य कुलपतेरनुमालिनीतीरम्...॥...पातः प्रविश्य।

ধর্ম্যাস্তপোধনানাং প্রতিহতবিঘ্নাঃ ক্রিয়াঃ সমবলোক্য ।
জ্ঞাস্যসি কিয়দ্ভুজো মে রক্ষতি মৌর্ব্বীকিণাঙ্ক ইতি (১)॥১৩॥

---

শকুন্তলয়েতি। "সর্ব্বৈস্তৈস্তেন পুত্রেণ পৃথিবী অনুরঞ্জিতা" ইত্যাদিবৎ অভেদে তৃতীয়া। অনুমালিনীতীরমিতি বিভক্ত্যর্থে অব্যয়ীভাবঃ।

কুলপতিলক্ষণং যথা "মুনীনাং দশসাহস্রং যোঽন্নদানাদিপোষণাৎ।
অধ্যাপয়তি বিপ্রর্ষিঃ স বৈ কুলপতিঃ স্মৃতঃ॥"

অত্র ছেকো নাম নাট্যালঙ্কারঃ "কার্য্যকরণমুক্তং স্যাৎ" ইতি দর্পণলক্ষণাৎ।

ধর্ম্ম্যা ইতি। প্রতিহতা ভবদ্বাহুবলপ্রভাবেণৈব বিনাশিতাঃ বিঘ্না যাসাং তাঃ, ধর্ম্ম্যা ধর্ম্মাদনপেতাঃ তপোধনানাং তপস্বিনাম্, ক্রিয়া যাগাদিকর্ম্মাণি, সমবলোক্য, মৌর্ব্বী ধনুর্গুণস্তস্য যঃ কিণঃ ঘর্ষণেন শুষ্কব্রণঃ স এব অঙ্কশ্চিহ্নং যত্র স তাদৃশঃ মে মম ভুজস্তস্যেত্যর্থঃ, ভুজো বাহুঃ, কিয়ৎ কিং পরিমাণম্, রক্ষতি ইতি জ্ঞাস্যসি। ধর্ম্ম্যক্রিয়াণাং নির্বিঘ্নতাদর্শনেন ত্বদ্বাহুযুগ্মং সর্ব্বমিব ভূমণ্ডলং সর্ব্বথৈব রক্ষতীতি জ্ঞাস্যসীতি ভাবঃ।

অত্র ধর্ম্ম্যক্রিয়াণাং নির্বিঘ্নতাদর্শনেন স্বকীয়বাহুদ্বারা সর্ব্বস্য সর্ব্বথা রক্ষায়া অনুমানাৎ অনুমানং নাম লক্ষণম্। যথা দর্পণে—

"অপি কেনচিদ্ যত্র কিঞ্চিদন্যদনুমীয়তে।"

আর্য্যা জাতিঃ॥১৩॥

---

তপস্বী। রাজন্! আমরা সমিধ্ আহরণ করিবার জন্য চলিয়াছি। মালিনীনদীর তীরে আমাদের গুরু কুলপতি কণ্বের এই আশ্রম দেখা যাইতেছে; শকুন্তলাই ইহার অধিষ্ঠাত্রী। যদি আপনার অন্য কার্য্যের অতিক্রম না হয়; তবে আপনি এই আশ্রমে প্রবেশ করিয়া আতিথ্য-সৎকার গ্রহণ করুন। আর—

তপস্বীদিগের নির্বিঘ্ন-সম্পন্ন ধর্ম্মকার্য্যগুলি দেখিয়া, "ধনুর গুণ

---

(১) রক্ষোতপোধনানাম্।

রাজা। অপি সন্নিহিতোঽত্র কুলপতিঃ ? । (ঘ)

বৈখা। ইদানীমেব দুহিতরং শকুন্তলামতিথিসৎকারা-য়াদিশ্য (১) দৈবমস্যাঃ প্রতিকূলং শময়িতুং সোমতীর্থং গতঃ। (ঙ)

রাজা। ভবতু। তামেব দ্রক্ষ্যামি। সা খলু বিদিত-ভক্তিং মাং মহর্ষয়ে নিবেদয়িষ্যতি (২)। (চ)

---

(ঘ) রাজেতি। অত্র আশ্রমে, কুলপতিঃ পূর্বোক্তলক্ষণঃ কণ্বঃ, অপি কিং সন্নিহিতঃ আসন্নং স্থিতঃ কিম্।

(ঙ) বৈখেতি। অস্যাঃ শকুন্তলায়াঃ প্রতিকূলম্ অভিমতবরপ্রাপ্তেঃ বিরোধি, দৈবং পূর্বজন্মার্জিতদুরিতম্, শময়িতুং বিনাশয়িতুম্।

যথা [illegible]উক্তম্ —"তত্র দৈবমভিব্যক্তং পৌরুষং পৌর্বদৈহিকম্।"

(চ) রাজেতি। ভবতু অস্ত্বেব মম মৃগয়াসমাগমবিরতিরিতি শেষঃ। তাং শকুন্তলামেব। বিদিতা অবগতা ভক্তিঃ মহর্ষিং কণ্বং প্রতি পূজাপরা মনোনুরাগো যস্য সঃ, মহর্ষয়ে কণ্বায়, মাং তাদৃশভক্তিমন্তমিত্যর্থঃ, নিবেদয়িষ্যতি জ্ঞাপয়িষ্যতি। মহর্ষিং প্রতি মম ভক্তিং প্রত্যক্ষীকৃত্য শকুন্তলা তাং ভক্তিং মহর্ষয়ে কথয়িষ্যতি, ততশ্চ মুনী [illegible] বিধাস্যতীতি ভাবঃ।

---

আকর্ষণের চিহ্নে চিহ্নিত আমার বাহু, কি পরিত্রাণ রক্ষা করিতেছে" ইহা জানিতে পারিবেন ॥ ১৩॥

রাজা। কুলপতি আশ্রমে আছেন কি ?।

তপস্বী। সম্প্রতিই, অতিথিসৎকার করিবার জন্য; কন্যা শকু-ন্তলাকে আদেশ করিয়া, উহার প্রতিকূল দৈবের উপশম করিবার নিমিত্ত, সোমতীর্থে গিয়াছেন।

---

(১) সন্দিশ্য।

(২) ভবতু। তামেব দ্রক্ষ্যামি। সা খলু বিদিতভক্তিং মাং মহর্ষেঃ কথয়িষ্যতি।

वैखा। साधयामस्तावत्। इति (१) सशिष्यो निष्क्रान्तः। (क)

राजा। सूत! नोदय (२) अश्वान्, पुण्याश्रमदर्शनेनात्मानं पुनीमहे। (ज)

सूतः। यदाज्ञापयत्यायुष्मान्। इति भूयो रथवेगं रूपयति (३)। (झ)

राजा। समन्तादवलोक्य। सूत! अकथितोऽपि ज्ञायत एवाय माभोगस्तपोवनस्य (४)। [ञ]

विदितभक्तिरिति भक्तिशब्दो भावे क्तिप्रत्ययान्तः। तेन पूरण्यादित्वान्न पुंवद्भावनिषेध इति तत्रैव द्रष्टव्यम्।

(क) वैखेति। तावत् वाक्यालङ्कारे, साधयामो गच्छाम.। यथा दर्पणे 'प्रायेण ण्यन्तकः साधिर्गमेः स्थाने प्रयुज्यते।"

(ज) राजेति। नोदय चालय। पुनीमहे पवित्रं कुर्म्महे।

(झ) सूत इति। भूयः पुनरपि। रूपयति साधयति।

রাজা। হউক। তাঁহার সহিতই দেখা করি; তিনি (শকুন্তলা) আমার ভক্তি জানিয়া, মহর্ষিকে জানাইবেন।

তপস্বী। তবে আমরা যাই। ( এই বলিয়া শিষ্যের সহিত চলিয়া গেলেন )

রাজা। সারথি! ঘোড়াগুলিকে চালাও; পুণ্য আশ্রম দেখিয়া আত্মাকে পবিত্র করি।

সারথি। আয়ুষ্মান্ যাহা আদেশ করেন। ( এই বলিয়া রথের বেগ অভিনয় করিতে লাগিল ).

(१) क्वचित् इतिशब्दो नास्ति।

(२) चोदय।

(३) भूयो रथवेगं निरूपयति। [४] मध्यायमाश्रमतपोधनस्य।

सूतः । कथमिव ? । [ट]

राजा । किं न पश्यति भवान् ? । इह हि—

नीवाराः शुक-कोटरार्भक-मुख-भ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः (१) सूच्यन्त एवोपलाः ।

---

(ञ) राजेति । समन्तात् सर्वासु दिक्षु । अकथितोऽपि केनचिदपरिचायितोऽपि तपोवनस्य अयमेव आभोगः पूर्णता सीमेत्यर्थः ज्ञायते अनुमीयते । 'पूर्णत्वयवाभोगः" इति त्रिकाण्डशेषः ।

(ट) सूत इति । कथमिव कथम्भूतं तवेदं ज्ञानमित्यर्थः ।

नीवारा इति । तरूणाम् अधो निम्नदेशे, शुकानां तदाख्यपक्षिणां ये कोटरार्भकाः तरुगात्रस्थितरन्ध्रस्थशावकाः तेषां मुखेभ्यो भ्रष्टाः पतिताः नीवाराः धान्यानि दृश्यन्त इति शेषः । तपस्विभिरेव अनायासलभ्यतया नीवारव्यवहारात शुकैश्च नीत्वा अर्भकेभ्यो दानात् अन्यत्र तु तदाहरणासम्भवात् तपोवनसीमेयमिति भावः । क्वचित् कुत्रचिद्देशे, इङ्गुदीफलानि भिन्दन्ति तैलार्थं चूर्णयन्तीति ते इङ्गुदीफलभिदः, अतएव प्रस्निग्धाः प्रकर्षेण तैलाक्ता एव, उपलाः पाषाणाः, सूच्यन्ते तपोवनसीमासूचकतया दृश्यन्ते इत्यर्थः । अन्यत्र ईदृशपाषाण-

---

রাজা। (সকল দিকে দৃষ্টিপাত করিয়া) সারথি! কেহ না বলিয়া দিলেও, ইহাই যে তপোবনের সীমা, তাহা বুঝিতেছি।

সারথি। কিরূপে (বুঝিলেন)?

রাজা। তুমি কি—দেখিতেছ না? এই স্থানে—

শুকপক্ষীর কোটরস্থ শাবকদিগের মুখ হইতে নিপতিত, ব্রীহিধান

---

(१) इङ्गुदीफलभिदः ।

विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगाः
तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः ॥१४॥

अपि च ।

कुल्याम्भोभिः पवनचपलैः शाखिनो धौतमूलाः
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन ।

---

दर्शनासम्भवात् तपोवनारम्भ एवायमित्यभिप्रायः। विश्वासस्य 'अस्मान् कोऽपि न हिंस्यात्" इति विस्रम्भस्य उपगमात् आजन्मत एव लाभात् अभिन्ना भेदरहिता गतिर्येषां ते तादृशा मृगाः, शब्दं रथशब्दं, सहन्ते निरुद्वेगमाकर्णयन्ति। अन्यत्र मृगाणामीदृशी निर्भयता न स्यादिति तपोवनाभोग एवायमित्याशयः। तथा तोयाधारपथा जलाशयमार्गाश्च, वल्कलशिखानां परिहितवल्कलप्रान्तानां निष्यन्दरेखाभिर्विगलज्जलचिह्नैः अङ्किताश्चिह्निता विद्यन्त इति शेषः। स्थूलरेखादर्शनात् वल्कलशिखानिष्यन्दजनितैवेयं रेखा इति, तथा मुहुः स्नायिनां तपस्विनामिव इमे पन्थानः, तेन च तपोवनस्यैवायमाभोग इति भावः।

अत्र तपोवनाभोगानुमानकार्यं प्रति बहुतरकारणोपन्यासात् समुच्चयः, तत्सङ्कर-विच्छित्तिविशेषाश्रयानुमानालङ्कारः।

'तृणधान्यानि नीवाराः" इत्यमरः। शार्दूलविक्रीडितं वृत्तम् 'सूर्याश्वैर्मसजास्तताः सगुरवः शार्दूलविक्रीडितम्" इति लक्षणात् ॥१४॥

कुल्येति। पवनचपलैः वायुना कम्पितैः, कुल्यानां कृत्रिमक्षुद्रनदीनाम्, अम्भो-

---

সকল, বৃক্ষের নীচে রহিয়াছে; কোন স্থানে ইঙ্গুদীফলভেদক সুস্নিগ্ধ পাষাণ সকল দেখা যাইতেছে; বিশ্বাস লাভ করায় শ্রেণীবদ্ধ হরিণগণ রথের শব্দ শুনিতেছে এবং জলাশয়ের পথগুলি, বল্কলের অগ্র হইতে বিগলিত জলরেখায় আঙ্কিত রহিয়াছে ॥১৪॥

আরও, বায়ুসঞ্চালিত কৃত্রিম ক্ষুদ্র নদীর জলে বৃক্ষসকলের মূল

एते चार्व्वागुपवनभुवि छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति (१) ॥१५॥

सूतः। सर्वमुपपन्नम्। [ठ]

राजा। स्तोकमन्तरं गत्वा। आश्रमोपरोधो माभूत्, तदिहैव रथं स्थापय, यावदवतरामि [२]। (ड)

---

निर्जलैः, शाखिनो वृक्षाः, धौतानि मूलानि येषां ते तादृशा भवन्ति। तपोवन एवेदृशकृत्रिमसरिन्निर्माणादन्यत्र चासम्भवात् तपोवनाभोग एवायमिति भावः। अन्यच्च यज्ञाग्नौ आहुतघृतस्य धूमोद्गमेन, किशलयरुचां तरुपल्लवद्युतीनां रागो लौहित्यम्, भिन्नो वैपरीत्यं प्राप्तः। तपोवनादन्यत्र ईदृशाज्यधूमोद्गमासम्भवात् तदाभोग एवायमित्याशयः। एते दृश्यमानाः हरिणशिशवश्च, नष्टाशङ्काः आजन्मत एव स्वहिंसायाः अदर्शनात् निर्भयाः सन्तः, छिन्नाः छित्त्वा एभ्य एव खादनाय दत्ता दर्भाणां कुशानामङ्कुरा यस्यां तस्याम्, उपवनभुवि उद्यानचत्वरे, अर्वाक् अस्माकं समीप एव, मन्दमन्दम् अल्पमल्पं चरन्ति भ्रमन्ति। तपोवनं विना अन्यत्र ईदृशाहिंसाया अदर्शनात् तपोवनाभोग एवायमित्यभिप्रायः।

अत्रापि पूर्ववदेवालङ्कारः। मन्दाक्रान्ता वृत्तम्
'मन्दाक्रान्ताम्बुधिरसनगैर्मोभनौ तौ गयुग्मम्' इति लक्षणात्॥१५॥

(ठ) सूत इति। सर्वं भवदुक्तम्, उपपन्नं युक्तिसङ्गतम्, मयापि तथैव दर्शनादिति भावः।

---

ধৌত হইতেছে; ঘৃতের ধূম উঠিতে থাকায় পল্লবকান্তির রক্তিমা বিপরীত হইয়া গিয়াছে এবং এই সকল হরিণশাবক, আমাদের নিকটেই নির্ভয়ে ছিন্নকুশাঙ্কুর উদ্যানভূমিতে অল্প অল্প বিচরণ করিতেছে॥১৫॥

সারথি। সমস্তই ঠিক বটে।

---

(१) विद्यासागरीयायं श्लोकः परिष्कृतः।

(२) तपोवननिवासिनामुपरोधो माभूत् एतावदेव।

सूत: । धृता: प्रग्रहा:, अवतरत्वायुष्मान् । (ढ)

राजा । अवतीर्य्य आत्मानमवलोक्य च [१] । सूत ! विनीतवेशेन प्रवेष्टव्यानि तपोवनानि, तदिमानि तावद्गृह्यन्तामाभरणानि धनुश्च । इति सूतस्यार्पयति । (ण)

---

(ङ) राजेति । स्तोकमन्तरं गत्वा रथारूढ़ एव किञ्चिदाश्रमाभ्यन्तरं गत्वा । तथा गमनेनैव रथचक्रघर्षणेन दर्भाङ्कुरादिक्षतिदर्शनादाह आश्रमोपरोध इति । आश्रमस्य उपरोध: रथचक्रघोटकखुराघातेन क्षति:, माभूत न भवतु । । तत् तस्मात । याव च्छब्दो वाक्यालङ्कारे ।

(ढ) सूत इति । प्रग्रहा अश्वरश्मय:, धृता रथस्थापनाय आकृष्टा: ।

(ण) राजेति । आत्मानं देहम् । देहावलोकनं स्ववेशस्य भावदर्शनार्थम् । विनीतवेशेन अनुद्धतपरिच्छदेन तपोवनानि प्रवेष्टव्यानि । तथा च महामाननीयानां मुनीनामन्तिके विनयसूचनमेव सर्वथा सङ्गतमिति भाव: । तत् तस्मात् । आभरणानि वीरभावव्यञ्जका अलङ्कारा: । गृह्यन्तां रक्ष्यन्ताम् । तथा च वीरत्वव्यञ्जकानामाभरण-धनुषामभावे विनीतवेश एव स्यादित्याशय: ।

अत्र नीतिर्नाम नाट्यालङ्कार: 'नीति: शास्त्रेण वर्त्तनम्" इति दर्पणलक्षणात् । इदमेव तदोदाहरणम् । अर्पयत्य स्थानमात्ररूपतया स्वत्वध्वंसाभावेन सम्प्रदानत्वा-सम्भवात् सूतस्येति सम्बन्ध एव षष्ठी, रजकस्य वस्त्रं ददातीतिवत् ।

---

রাজা। (একটু ভিতরে যাইয়া) আশ্রমের ক্ষতি না হয়, সেই জন্য এই খানেই রথ রাখ; আমি নামি।

সারথি। অশ্বরজ্জু ধরিয়াছি; আপনি নামুন।

রাজা। (নামিয়া দেহের প্রতি দৃষ্টিপাত করিয়া) সারথি! তপো-

---

(१) क्वचित् आत्मानमित्यादि नास्ति ।

सूतः। गृह्णाति। [त]

राजा। यावदाश्रमवासिनः प्रत्यवेक्ष्य निवर्त्तिष्ये, तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः [१]। [थ]

सूतः। यथाज्ञापयत्यायुष्मान् [२]। इति निष्क्रान्तः।

राजा। परिक्रम्यावलोक्य च। इदमाश्रमपदं तावत् प्रविशामि। प्रविश्य प्रवेष्टकेन निमित्तं सूचयित्वा। अये! (३)। [द]

---

(त) सूत इति। गृह्णाति राजदत्ताभरणधनूंषीति शेषः।

(थ) राजेति। प्रत्यवेक्ष्य अभावाभियोगसम्भवप्रभृतिना प्रत्यवेक्ष्य। आर्द्रं मलनश्रमजनितघर्मापनयनाय जलबिन्दुसिक्तं पृष्ठं येषां ते। वाजिनो घोटकाः।

(द) राजेति। परिक्रम्य आश्रमं प्रति कियन्तं पदक्षेपं कृत्वा। आश्रम एव पदं स्थानम्। प्रवेष्टकेन दक्षिणबाहुना। निमित्तं स्पन्दनरूपं शुभलक्षणम्, सूचयित्वा अभिनीय। अये इति शुभलक्षणत्वादादरे।

---

বনে বিনীতবেশে প্রবেশ করিতে হয়, অতএব এই সকল অলঙ্কার ও ধনু গ্রহণ কর।

(এই বলিয়া সারথির নিকট সমর্পণ করিলেন)..

সারথি গ্রহণ করিল।

রাজা। আমি যাবৎ আশ্রমবাসীদিগের পর্যবেক্ষণ করিয়া ফিরিয়া আসি, তুমি তাবৎ ঘোড়াগুলির পিঠ ভিজাইয়া দাও।

সারথি। আপনি যাহা আদেশ করেন। (এই বলিয়া চলিয়া গেল)

---

(১) राजा। अवतार्य। सूत! विनीतवेशेन प्रवेष्टव्यानि तपोवनानि नाम। इदं तावद्गृह्यताम्। सूताया भरणानि धनुश्चोपनीयार्पयति। सूत! यावदाश्रमवासिनः प्रत्यवेक्ष्य अहमुपावर्त्ते, तावत् ···।

(२) सूतः। तथा। निष्क्रान्तः।

(३) ···इदमाश्रमद्वारं यावत् प्रविशामि। प्रविश्य निमित्तं सूचयन्।

**शान्तमिदमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहास्य ?**
**अथवा भवितव्यानां द्वाराणि भवन्ति सर्व्वत्र ॥१६॥**

---

'पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुषु ।"

'भुजबाहू प्रवेष्टो दोः" 'निमित्तं हेतुलक्ष्मणोः' इति च अमरः । 'अयि क्रोधे विषादे च सम्भ्रमे स्मरणेऽपि च ।" "सम्भ्रमः साध्वसेऽपि स्यात् संवेगादरयोरपि ।" इति च विश्वः ।

प्रवेष्टक इत्यनुकम्पायां कप्रत्ययः ।

शान्तमिति । इदम् आश्रमपदं तपोवनरूपं स्थानम्, शान्तं शान्तिरसस्यैव आश्रयभूतम् ; तपस्विभिरेवाश्रितत्वादिति भावः । अव्ययानां नानार्थत्वात् चकारः किन्त्वर्थे तथा च किन्तु बाहुर्दक्षिणो भुजः स्फुरति स्पन्दते स्पन्दित्वा उत्तमस्त्रीलाभरूपं फलं सूचयतीत्यर्थः । इह आश्रमे, अस्य दक्षिणभुजस्पन्दनस्य, फलम् उत्तमस्त्रीलाभरूपः सूचितविषयः, कुतः कस्मात् सम्भवति ? कुतोऽपि नेत्यर्थः ; शान्ततया निरुद्धास्पदे स्थाने शृङ्गाररूपोद्दामप्रवृत्तेः सर्वथैवासम्भवादित्याशयः । उक्तामनुपपत्तिं स्वयमेव समाधत्ते अथवेति । अथवेति समर्थने । अवश्यं भविष्यन्तीति भवितव्यानि तेषाम-वश्यम्भाविनां वस्तूनाम्, द्वाराणि भवनकारणानि, सर्वत्रैव भवन्ति ईश्वरेच्छावशात् जायन्ते । तथा च कुसुमे कीटस्येव शान्तेऽप्याश्रमे ईश्वरेच्छयैव शृङ्गारस्यापि सम्भवा-दित्यभिप्रायः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । तथा दक्षिणो बाहुरिति

---

রাজা। (পাদক্ষেপপূর্ব্বক দৃষ্টিপাত করিয়া) এই আশ্রম ; প্রবেশ করি। (প্রবেশপূর্ব্বক দক্ষিণবাহুদ্বারা শুভলক্ষণ সূচনা করিয়া) ওহে ! এই আশ্রম, শান্তিরসের স্থান ; অথচ দক্ষিন বাহু স্পন্দিত হই-তেছে ; সুতরাং এখানে ইহার ফল হইবে কোথা হইতে ? । অথবা যাহা অবশ্যই হইবে, তাহার উপায় সর্ব্বত্রই হইয়া থাকে ॥১৬॥

नेपथ्ये। इदो इदो पिअसहीओ [१]। [ध]

राजा। कर्णं दत्त्वा। अये! दक्षिणेन वृक्षवाटिकामालाप इव श्रूयते, यावदत्र गच्छामि। परिक्रम्यावलोक्य च। अये! एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः पयो दातुमित एवाभिवर्त्तन्ते। निरूप्य। अहो! मधुरमासां दर्शनम्। [न]

---

(ध) इत इतः प्रियसख्यौ।

---

बाहुर्बिषे वक्तव्ये बाहुरिति सामान्याभिधानात् विशेषे अविमर्षाख्यदोषः; स च 'शान्तमाश्रमपदं स्फुरति च बाहुः, कुतः फलमिहास्य' इति पाठेन समाधेयः। "विषयमक्षरं गुरु पादान्तस्थं विकल्पेन" इत्युक्तेः 'बाहुः' इति द्वितीयचरणान्तिमाक्षरस्य गुरुत्वमङ्गीकार्य्यम्, समाधानीयपाठे तु लघुत्वमेवेति बोध्यम्।

"अपाये निर्गमे द्वारम्" इति मेदिन्याः नैषधः।

भवितव्यानामस्ति "कृत्यल्युटोऽन्यत्रापि" इति कर्त्तरि तव्यप्रत्ययः।

आर्य्या जातिः ॥१६॥

(ध) नेपथ्य इति। प्रियसख्यौ अनसूयाप्रियंवदे, इत इतः अस्यामस्यां दिशि, आगच्छतमिति शेषः। नेपथ्यात् शकुन्तलाया उक्तिरियम्। "शौरसेनी प्रयोक्तव्या तादृशीनाञ्च योषिताम्" इति साहित्यदर्पणात् शकुन्तलादीनां शौरसेनीभाषेयम्।

(न) राजेति। कर्णं दत्त्वा तदालापश्रवणाय कर्णं सम्प्रेष्य। अये इत्या-

---

নেপথ্যে। প্রিয়সখীরা এই দিকে এই দিকে।

রাজা। (কাণ দিয়া) ওহে! উদ্যানের অদূর দক্ষিণ দিকে যেন আলাপ শুনিতেছি; তা এই স্থানেই যাই। (কতিপয়পদক্ষেপপূর্ব্বক

---

(१) सख्यौ।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥१७॥

असम्बोधनम् । वृक्षवाटिका दक्षिणेन उपवनस्य अदूरे दक्षिणस्यां दिशि, आलापः कथोपकथनम् श्रूयत इव । यावच्छब्दोऽवधारणे । अत्रैव वृक्षवाटिकां दक्षिणेनैव । अये इति विस्मये । स्वप्रमाणानुरूपैः निजनिजदेहपरिमाणयोग्यैः, सेचनघटैः जलदानकुम्भैः, बालपादपेभ्यः क्षुद्रवृक्षेभ्यः पयो जलम्, दातुम्, इत एव अस्यामेव दिशि अभिवर्त्तन्ते आगच्छन्ति । निरूप्य विशेषेणावलोक्य । अहो इत्याश्चर्य्ये । आसां तपस्विकन्यकानाम्, दर्शनं मधुरं प्रीतिकरम् ।

दक्षिणेनेति "अदूरे एनोऽपञ्चम्याः" इत्येनप्रत्ययः । अव्ययमिदम् वृक्षवाटिकामिति "द्वितीयैनेन" इति द्वितीया ।

"अमात्यगणिकागेहोपवने वृक्षवाटिका" इति "यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः । "मधुरौ तुप्रियस्वादू" इत्यनेकार्थः ।

शुद्धान्तेति । यदि आश्रमे सर्वथा सौन्दर्य्यवर्द्धकचेष्टारहिते तपोवने वसतीति तस्य, जनस्य शकुन्तलारूपस्य लोकस्य, इदं वपुः शरीरम्, शुद्धाः कामप्रवृत्त्यभावेन निर्म्मला रक्षकजना अन्ते समीपे यस्य तस्मिन् शुद्धान्ते राजान्तःपुरे, दुर्लभम् असम्भवात् दुष्प्रापम्, भवेदिति शेषः । तदा वनलताभिः अयत्नेनैव वृद्ध प्राप्ताभिरिति

---

দর্শন করিয়া) ওহে এই তপস্বিকন্যারা, আপনাদের অনুরূপ সেচন-কলস দ্বারা ক্ষুদ্র বৃক্ষগুলিকে জল দিবার নিমিত্ত, এই দিকেই আসিতেছে। (বিশেষ ভাবে দেখিয়া) কি আশ্চর্য্য! ইহাদের দর্শনটী বড়ই প্রীতিকর।

তপোবনবাসী লোকের এই আকৃতি যদি রাজাদের অন্তঃপুরে দুর্লভ হয়, তবে বনলতা নিজগুণে উদ্যানলতাকে পরাজিত করিল ॥১৭॥

यावदेतांश्छायामिमामाश्रित्य प्रतिपालयामि । इति विलोकयन् स्थितः । [१] [प]

ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला । [फ]

---

भाव , गुणैः कोमलतामनोहरताप्रभृतिभि , उद्यानलताः बहुयत्नेन वर्द्धिता इत्याशयः, दूरीकृताः खलु पराजिता एव । तथा च अयत्नलालितया शकुन्तलया रूपमाधुर्य्येण प्रयत्नलालितानां राजान्तःपुरवासिनीनां रमणीनां हीनीकरणम्, , अयत्नजाभिर्वनलताभि प्रयत्नवर्द्धितानामुद्यानलतानां हीनीकरणमिव अतीवविस्मयकरमिति भावः ।

अतएवात्र असम्भवद्वस्तुसम्बन्धरूपा निदर्शनालङ्कारः । तेन च शकुन्तलायाः सौन्दर्य्यं मर्त्त्यदुर्लभमिति ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः ।

यदीत्यभिधानानन्तरं तदा इत्यस्यानभिधानेऽपि सामर्थ्यादेवावगतेर्न न्यूनपदत्वदोषः "क्वचिन्न दोषो न गुणः" इति दर्पणात् ।

तथात्र शकुन्तलां प्रति दुष्मन्तस्य अनुरागरूपकाव्यार्थस्य समुत्पत्तेरुपक्षेपो नाम मुखसन्ध्यङ्गम् ।

"काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृतः" इति लक्षणात् ।

"स्त्र्यागारं भूभुजामन्तःपुरं स्यादवरोधनम् । शुद्धान्तश्चावरोधश्च इत्यमरः । आर्य्या जातिः ॥१७॥

(प) यावदिति । इमां छायां वृक्षाणां छायामाश्रित्य एता आगच्छन्तीस्तपस्विकन्यकाः प्रतिपालयामि प्रतीक्षे । को नाम स्वयमुपस्थितं सुदृश्यं न पश्यतीति भावः । यावच्छब्दो वाक्यालङ्कारे ।

(फ) तत इति । यथोक्तः सेचनघटधारणमेव व्यापारो यस्याः सा ।

---

এই ছায়া অবলম্বন করিয়া ইহাদের প্রতীক্ষা করি । (এই বলিয়া চাহিয়া রহিলেন )

---

(१) यावदिमां छायामाश्रित्य प्रतिपालयामि । विलोकयन् स्थितः ।

একা। হলা সউন্তলে! তত্তো বি তাদকস্সস্স অস্সম-রুক্খআ পিঅদরা ত্তি তক্কেমি; জেণ ণোমালিআকুসুমপরিপেলবাবি তুমং এদাণং আলবালপরিজরণে ণিউত্তা। [ব]

---

(ব) হলা শকুন্তলে! ত্বত্তোঽপি তাতকণ্বস্য আশ্রমবৃক্ষাঃ প্রিয়তরা ইতি তর্কয়ামি; যেন নবমালিকাকুসুমপরিপেলবাপি ত্বম্ এতেষামালবালপরিপূরণে নিযুক্তা।

---

(ব) একেতি। হলেতি সখীসম্বোধনে। ত্বত্তোঽপি ভবত্যা অপি। প্রিয়তরা অধিকপ্রিয়াঃ, ইতি তর্কয়ামি আলোচয়ামি; যেন হেতুনা, নবমালিকাকুসুমবৎ পরিপেলবাপি সর্বতঃ কোমলাপি। এতেষাম্ আশ্রমবৃক্ষাণাম্, আলবালানাং মূলস্থখাতানাং পরিপূরণে জলৈঃ পূর্ণীকরণে উপকারকত্বাদুপকার্য্যং প্রিয়তরমেবেতি ভাবঃ।

"হণ্ডে হঞ্জে হলাহ্বানং নীচাং চেটীং সখীং প্রতি।" "স্যাদালবালমাবালমাবাপঃ" ইতি অমরঃ। "পেলবং কোমলম্" ইতি ত্রিকাণ্ডশেষঃ।

---

তদনন্তর দুইটী সখীর সহিত উক্তরূপে (জলকুম্ভধারণ করিয়া) শকুন্তলা প্রবেশ করিল।

একটি সখী। শকুন্তলা! আমি মনে করি—বাবা কণ্বের নিকট তোমা অপেক্ষা আশ্রমের গাছগুলি বিশেষপ্রিয়; যেহেতু নবমালিকা-ফুলের ন্যায় অতিশয় কোমল হইলেও, তোমাকে এগুলির পরিখা পূরণ করিতে নিযুক্ত করিয়াছেন।

शकु । हला अणसूए ! ण केवलं तादस्स णिओओ, मम वि एदेसुं सहोअरसिणेहो । इति वृक्षसेचनं नाटयति (१) । (भ)

द्वितीया । सहि ! सउन्तले ! उदअं लम्भिदा एदे गिम्ह-आलकुसुमदाइणो अस्समरुक्खआ । दाणिं अदिक्कन्तकुसुमसमए वि रुक्खके सिञ्चह्म ; तेण अणहिसन्धिगुरुओ धम्मो भविस्सदि (२) । [म]

---

(भ) हला अनसूये ! न केवलं तातस्य नियोगः, ममापि एतेषु सहोदरस्नेहः ।

(म) सखि ! शकुन्तले ! उदकं लम्भिता एते ग्रीष्मकालकुसुमदायिनः आश्रमवृक्षाः । इदानीम् अतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामः ; तेन अनभिसन्धिगुरुको धर्मो भविष्यति ।

---

(भ) शकु इति । एतेषु आश्रमवृक्षेषु सहोदरस्नेहः एकाश्रमजातत्वात् सहोदरेष्विव प्रणयः । तेन तातनियोगं विनाप्यहं स्वयमेव स्नेहवशादेतान् सिञ्चामीति भावः । नाटयति अभिनयति ।

(म) द्वितीयेति । उदकं सिक्तजलम्, लम्भिताः प्रापिताः । अतिक्रान्तः कुसुमसमयः पुष्पोत्पादनकालो येषां तान् । अनभिसन्धिना उपकारप्रत्याशाभावेन गुरुको

---

শকুন্তলা। ওলো অনসূয়া! কেবল বাবার নিয়োগ নহে; আমারও এগুলির প্রতি সহোদরের স্নেহ রহিয়াছে। (এই বলিয়া গাছে জল দেওয়া অভিনয় করিতে লাগিল)

দ্বিতীয়া সখী। সখি! শকুন্তলা! গ্রীষ্মকালে পুষ্পদায়ী এই

---

(१) शकुन्तला। ण केवलं तादस्स णिओओ एव्व अत्थि मे सोदरसिणेहो वि एदेसु। नाट्येन सिञ्चति।

(२) द्वितीयेत्यादिपाठः पुस्तकान्तरे नास्ति।

शकु। हला पिअम्बदे! रमणिज्जं मन्तेसि। इति भूयो वृक्ष-सेचनं नाटयति (१)। (थ)

राजा। निर्वर्ण्य आत्मगतम्। कथमियं सा कण्वदुहिता शकुन्तला। सविस्मयम्। अहो! असाधुदर्शी खलु भगवान् कण्वः; य इमामाश्रमधर्मे नियुङ्क्ते [२]। [द)

(थ) हला प्रियंवदे। रमणीयं मन्त्रयसि।

महान्। वर्त्तमानसमय एव पुष्पदायिभ्यो जलदानं प्रचुरपुष्पलाभाशयैव, अतिक्रान्त-कुसुमसमयेभ्यो जलदानन्तु तत्प्रत्याशां विनैवेति महत्त्वमेव तद्धर्म्म इति भावः। यदाह नारदः—

"पात्रेभ्यो दीयते नित्यमनपेक्ष्य प्रयोजनम्।
केवलं धर्म्मबुद्ध्या तु धर्म्मदानं तदुच्यते॥"

(थ) शकु इति। रमणीयं युक्तियुक्तत्वात् सुन्दरम् यथा स्यात्तथा, मन्त्रयसि ब्रवीषि। भूयः पुनरपि।

(द) राजेति। निर्वर्ण्य परमकोमलामतीवरूपलावण्यवतीञ्च शकुन्तलां विलोक्य, आत्मनि स्वस्मिन्नेव गतं स्थितम् अन्यैरश्राव्यमित्यर्थः। कविस्तु राज्ञस्तथाविधं मनः-सम्पर्कं समासमसमासं सम्भाव्य इदं वचितवानिति बोध्यम्। एवमन्यत्रापि। कथं शब्दः

सकल আশ্রমবৃক্ষকে জল দেওয়া হইয়াছে। এখন যাহাদের পুষ্পদান করিবার সময় অতীত হইয়াছে, সেই সকল বৃক্ষকে জল দান করি; তাহাতে উপকার প্রত্যাশা না থাকায় গুরুতর ধর্ম্ম হইবে।

শকুন্তলা। ওলো প্রিয়ংবদা! তুই ভাল বলিয়াছিস্। (এই বলিয়া পুনরায় গাছে জল দেওয়া অভিনয় করিতে লাগিল)

(१) शकु इत्यादिपाठोऽपि क्वचिदस्ति।

(२) राजा। कथमियं सा कण्वदुहिता? असाधुदर्शी खलु तत्रभवान् काश्यपः....।

इदं किलाव्याजमनोहरं वपुः
तपःक्षमं (१) साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया
शमीलतां छेत्तुमृषिर्व्यवस्यति ॥१८॥

---

सम्भावनायाम्। सा पूर्वं समिदाहरणाय प्रस्थितेन वैखानसेन निवेदिता। अहोशब्दो विषादे। असाधुदर्शी असम्यग्विवेचनकारी। आश्रमधर्म्मे तपोवनोचितव्यवहारे अतिथिसेवातरुसेचनादिकष्टकरकार्ये इत्यर्थः। तथा च ईदृशीं परमकोमलसुन्दरीमनालोचयन्, प्रत्युत कठोरकार्ये नियुञ्जानो मुनिर्नियोगमूढत्वादसाधुदर्शी एवेति भावः।

'अश्राव्यं खलु यद्वस्तु तदिह स्वगतं मतम्।" इति साहित्यदर्पणः।

"निर्वर्णनन्तु निध्यानं दर्शनालोकनेक्षणम्" इत्यमरः।

"कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्च" इति। "अहो धिगर्थे शोके च करुणार्थविषादयोः। सम्बोधने प्रशंसायां विस्मये पादपूरणे। असूयायां वितर्के स्यात्" इति "धर्म्मोऽस्त्री पुण्य आचारे" इत्यादि च मेदिनी।

उक्तमेव असाधुदर्शित्वं पुनः समर्थयितुमाह इदमिति। य ऋषिः, इदं दृश्यमानम्, न विद्यते व्याजं सौन्दर्यसम्पादनार्थम् अलङ्कारधारणादिकं छलं यत्र तस्मादव्याजम् अत एव मनोहरं स्वभावादेव सुन्दरमित्यर्थः किल वपुः शरीरम्, तपःक्षमं तपस्याकरणयोग्यम्, साधयितुं सम्पादयितुम्, इच्छति। ध्रुवं निश्चितमेव, स ऋषिः कण्वः,

---

রাজা। (দেখিয়া স্বগত) ইনি সেই কণ্বের কন্যা শকুন্তলা। (বিস্ময়ের সহিত) ভগবান্ কণ্ব উপযুক্ত বিবেচক নহেন, যিনি ইহাকে আশ্রমধর্ম্মে নিযুক্ত করিয়াছেন।

যিনি এই স্বভাবসুন্দর শরীরটীকে তপস্যার যোগ্য করিতে ইচ্ছা

---

(१) तपःक्लमम्।

भवतु, पादपान्तरित एव विश्वस्तां तावदेनां पश्यामि।

इति तथा करोति (१)। (ख)

---

नीलोत्पलपत्रस्य अतीव कोमलस्य त्वाश्रयः धारया खड्गादिधारावत् प्रान्तभागेन, शमीलता नितान्तकठिना शमीवृक्षशाखाम्, छेत्तुं व्यवस्यति उद्युङ्क्ते। ईदृशकोमल-वपुषः तपःक्षमत्वसाधनेच्छा, कोमलया नीलोत्पलपत्रधारया कठिनशमीशाखाच्छेदने-च्छेव अत्यन्तमसम्भवैव, तां च कुर्वन् कण्वः असाधुदर्शी एवेति भावः।

अत एवात्र पूर्वापरार्द्धवाक्यार्थः असम्भवन् उक्तरूपं सादृश्यं बोधयतीति असम्भ-वद्वस्तुसम्बन्धरूपा निदर्शनालङ्कारः। तथा प्रयुक्तत्वस्य शकुन्तलां प्रति राजानुरागस्य अत्र बाहुल्यात् परिकरो नाम मुखसन्ध्यङ्गम्।

"समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनः" इति लक्षणात्।

एवमभिप्रायो नाम नाट्यलक्षणञ्च "अभिप्रायस्तु सादृश्यादभूतार्थस्य कल्पना" इति लक्षणात्।

"ध्रुवो भभेदे क्लीबन्तु निश्चिते शाश्वते त्रिषु"। "शमी शाखालते" इति च अमरः।

वंशस्थविलं वृत्तम्—

"वदन्ति वंशस्थविलं जतौ जरौ" इति लक्षणात् ॥१८॥

---

করেন, নিশ্চয়ই তিনি নীলোৎপলপত্র-ধারা দ্বারা শমীবৃক্ষের শাখাচ্ছেদন করিতে উদ্যত হন ॥১৮॥

হউক, বৃক্ষের অন্তরালে থাকিয়াই বিশ্বস্তা শকুন্তলাকে দেখি। (ইহার পর সেইরূপ করিতে লাগিলেন)

---

(१) क्वचिदिति शब्दो नास्ति।

शकु । हला अणसूए ! अदिपिणद्धेण वक्कलेण पिअंवदाए दढ़ं पीड़िदाह्मि, सिढ़िलेहि दाव णं [१] (व)

अन । शिथिलयति । (२) (श)

---

(व) हला अनसूये ! अतिपिनद्धेन वल्कलेन प्रियंवदया दृढ़ं पीड़िताऽस्मि, तत् शिथिलय तावदेनाम् ।

---

(ल) भवत्विति । भवतु कण्वस्य असाधुदर्शित्वं साधुदर्शित्वं वा तिष्ठतु, तदालोचनया न मे किञ्चित् प्रयोजनमिति भावः । स्वाभिप्रेतमेव करोमीत्याह पादपेति । पादेन शिफारूपेण पिबति रसमाकर्षतीति पादपो वृक्षस्तेन अन्तरितस्तिरोहितदेहः सन्नहम् । अतएव विश्वस्ताम् अपरिचितपुरुषदर्शनाभावात् अनुद्वेलितचित्ताम्, एनां शकुन्तलाम् । तथा सति सम्यग् द्रष्टुं शक्ष्यामीति भावः ।

(व) शकु इति । अतिपिनद्धेन अतीवदृढबद्धेन, वल्कलेन गात्रावरकतरुत्वचा । दृढमत्यन्तं पीडितास्मि पीडां प्रापितास्मि । शिथिलय शिथिलीकुरु । एनं वल्कलम् ।

अतिपिनद्धेनेति "धाञ् नह्योरपेरुपसर्गस्यादेः" इत्यपेरकारलोपः । शिथिलं कुरु इति शिथिलय शिथिलशब्दात् "इन् कारितं धात्वर्थे" इति इन् ।

(श) अनेति । शिथिलयति शिथिलीकरोति वल्कलमिति शेषः ।

---

শকুন্তলা। ওলো অনসূয়া! প্রিয়ংবদা বল্কল খানাকে অতি দৃঢ়রূপে বন্ধন করিয়া দিয়াছে, তাহাতে আমি বড়ই কষ্ট পাইতেছি। তা তুমি একটু শিথিল করিয়া দাও।

অনসূয়া। (শিথিল করিয়া দিল)

---

(१) शकुन्तला । हिला । सहि अणसूए ! अदिपिणद्धेण वक्कलेण पिअंवदाए णिअन्तिदह्मि सिढिलेहि दाव णं ।

(२) अनसूया । तह । शिथिलयति ।

प्रियं । सहासम् । एत्थ दाव पओहरवित्थारइत्तअं अत्तणो जोव्वणारम्भं उवालह, मं किं उवालहसि (१) । (ष)

राजा । सम्यगियमाह (२) । [स]

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाच्छादिना वल्कलेन ।

---

(ष) अत्र तावत् पयोधरविस्तारहेतुकम् आत्मनो यौवनारम्भम् उपालभस्व, मां किमुपालभसे ? ।

---

(ष) प्रियमिति । अत्र अस्मिन् पीडाविषये । पयोधरयोः स्तनयोर्विस्तारस्य हेतुकं हेतुभूतम्, आत्मनः स्वस्य । उपालभस्व तिरस्कुरु । उपालभसे तिरस्करोषि । तथा च पूर्वं त्वद्गात्रावरणयोग्येन पुरातनेन वल्कलेन पूर्ववदेव मया बद्धासि, किन्तु साम्प्रतं ते यौवनारम्भो जातः, तेन च इतराङ्गवत् स्तनावपि पूर्वापेक्षया नितरां विस्तृतौ जातौ, तत एव च अतिपिनद्धताप्रतीतिः, न पुनर्वल्कलमेव निर्दयमाकृष्य मया बद्धमिति भावः ।

(स) राजेति । इयं सखी सम्यगाह समीचीनं ब्रवीति । तथा च यौवनाविर्भावेन स्वभावत एव स्तनयोर्विस्तारात् दृढबद्धताप्रतीतिः, न पुनर्वस्तुत एव प्रियंवदया अद्य पूर्वापेक्षया दृढबद्धेति भावः ।

अथायं यौवनाविर्भावः पूर्वमेव कथं नानुभूत इत्याह इदमिति । इदमभिनवम् अभिनवयौवनास्पदम्, अस्याः शकुन्तलायाः, वपुः शरीरम्, स्कन्धदेशे उपहितौ

---

প্রিয়ংবদা। (হাস্যের সহিত) এ বিষয়ে স্তনবিস্তারের কারণ নিজের যৌবনারম্ভকে তিরস্কার কর, আমাকে তিরস্কার করিতেছ কেন ?।

রাজা। এ, ঠিক কথা বলিয়াছে।

---

(१) प्रियंवदा । एत्थ पओहरवित्थारइत्तअं अत्तणो जोव्वणं उवालह ।

(२) क्वचिदयं पाठो न दृश्यते ।

वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण (१) ॥१८॥

अथवा काममननुरूपमस्या वपुषो वल्कलं न पुनरलङ्कारश्रियं न पुष्यति। कुतः—(२) (ह)]

---

दत्तः सूक्ष्मग्रन्थिः स्कन्धबन्धनं यस्य तेन, तथा स्तनयुगस्य परिणाहं विशालताम्, आच्छादयतीति तेन वल्कलेन तदावरणेनेत्यर्थः, पाण्डुपत्राणां पक्वतया पाण्डुवर्णानां दलानाम् उदरेण अभ्यन्तरेण, पिनद्धं बद्धम् आवृतमिति यावत्, कुसुममिव, स्वां स्वकीयाम् शोभाम्, न पुष्यति आवृतत्वात् लोकलोचनगोचरतया न दधाति। अतएव अतनवल्कलावृततया स्तनकम्पादिप्रत्यक्षाभावात् यौवनाविर्भावः पूर्वं नानुभूत इति भावः।

अत्र श्रौतोपमालङ्कारः। तथा पाण्डुशब्दः सुष्ठु पिधानं प्रति न किञ्चिदुपकुरुते इति अपुष्टार्थत्वदोषः; स च 'सान्द्रपत्रोदरेण' इति पाठेन समाधेयः। पत्राणां सान्द्रत्वे सुष्ठु पिधानं स्यादिति भाव्यम्।

'परिणाहो विशालता" इत्यमरः। मालिनी वृत्तम्,

"न न म य ययुतेयं मालिनी भोगिलोकैः" इति लक्षणात् ॥१८॥

---

এই বল্কল, স্কন্ধদেশে সূক্ষ্মবন্ধনে বদ্ধ রহিয়াছে এবং স্তনদ্বয়ের বিশালতাকে আবৃত করিয়াছে; তথাপি শুভ্রবর্ণ পত্রের অভ্যন্তরে বদ্ধ পুষ্পের ন্যায় শকুন্তলার এই নবীন দেহখানি যে স্বকীয় শোভা ধারণ করিতেছে না, এমন নহে। কারণ—

---

(১) অয়ং শ্লোকোঽপি ক্বচিন্নাস্তি।

(২) রাজা। কামমননুরূপমস্যা বয়সো বল্কলং ন পুনরলঙ্কারশ্রিয়ং ন পুষ্যতি। কুতঃ।

सरसिजमनुविद्धं शैवलेनापि रम्यं
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम् ॥२०॥

---

(क) प्रियंवदोक्तिं समर्थ्य पश्चार्द्धेन स्वाभिमतं व्यनक्ति अथवेति । अस्याः शकुन्तलायाः, वपुषः शरीरस्य, क्षामं पर्य्याप्तम् अत्यन्तम् अननुरूपम् अयोग्यमपि, वल्कलम्, अलङ्कारश्रियम् आभरणजन्यशोभाम्, न पुष्यति न दधाति इति न, अपि तु पुष्यत्येवेत्यर्थः । "सम्भाव्यमाननिषेधनिवर्त्तने नञ्द्वयम्" इति वामनोक्तेर्नाधिकपदतादोषः ।

सरसिजमिति । शैवलेन अनुविद्धं संवृतमपि, सरसिजं पद्मम्, रम्यं मनोहरमेव तिष्ठति । तथा मलिनमपि हिमांशोश्चन्द्रस्य लक्ष्म हरिणचिह्नम्, लक्ष्मीं तनोति शोभां विस्तारयति । उभयत्रापि विशेषणं चिन्त्यमनेनादित्याशयः । तद्वत् इयमपि तन्वी कृशाङ्गी शकुन्तला, वल्कलेनापि तुच्छवल्कलपरिधानेनापि अधिकमनोज्ञा विशेषेण मनोहरा जातेति शेषः । हि तथाहि मधुराणां सौन्दर्य्यादिगुणेन प्रियाणाम्, आकृतीनामङ्गानाम्, किमिव वस्तु, मण्डनं भूषणम्, न भवति? अपि तु सर्व्वमेव वस्तु मण्डनं भवत्येवेत्यर्थः । अतएव इदं वल्कलमपि अस्या अलङ्कारश्रियं पुष्यत्येवेति भावः ।

अत्र रम्यत्वमनोज्ञत्वयोः लक्ष्मीतननस्य मधुरत्वस्य सुन्दरत्वरूपैकधर्म्मत्वेऽपि वाक्य-

---

অথবা বল্কলখানি, শকুন্তলার, শরীরের অত্যন্ত অযোগ্য হইলেও, যে অলঙ্কারের শোভা জন্মাইতেছে না, এমন নহে। কারণ—

পদ্ম, শৈবলসংযুক্ত হইলেও, সুন্দরই থাকে এবং চন্দ্রের কলঙ্ক, মলিন হইলেও সৌন্দর্য্য বিস্তার করে; আর এই কৃশাঙ্গী, বল্কলদ্বারাও অধিক মনোহর হইয়াছে। কারণ, কোন বস্তু, স্বভাবসুন্দর আকৃতির অলঙ্কার না হয়? ॥২০॥

अपि च । (१)

कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति ।
विकचसरसिजायाः स्तोकनिर्म्मुक्तकण्ठं
निजमिव कमलिन्याः कर्कशं वृन्तजालम् (२)॥२१॥

---

भेदेन पृथङ्निर्द्देशात् प्रतिवस्तूपमाद्वयम्, तथा लक्ष्म लक्ष्मीमिति अञ्जनम् धम्म ... श्रुतसाम्यात् छेकानुप्रासस्य, अनयोः संसृष्टिः। चतुर्थपादे सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासः अर्थापत्तिश्चेत्यनयोरेकाश्रयानुप्रवेशरूपः सङ्करः; तादृशसङ्करस्य च उक्तसंसृष्ट्या सह निरपेक्षतयावस्थितेः पुनः संसृष्टिः। संसृष्टिसङ्करयोरपि संसृष्टि-सङ्करौ सम्भवत इति प्रदर्शितमस्माभिः साहित्यदर्पणटीकायाम्।

सरसिजमिति "सप्तम्याः प्रायेण क्वचित्" इत्यलुक्।

"चिह्नं लक्ष्म च लक्षणम्" इत्यमरः। "मधुरौ तु प्रियस्वादू" इत्यनेकार्थध्वनि-मञ्जरी। मालती वृत्तम् ॥२०॥

पुनरपि स्वाभिमतमाह कठिनमिति। मृगाक्ष्याः हरिणनयनायाः शकुन्तलायाः, कठिनमपि अकोमलमपि, कान्तरूपम् एतच्छरीरसम्बन्धात् मनोज्ञभूतम्, वल्कलम् कर्तृ, विकचं प्रस्फुटितं सरसिजं पद्मं यस्यास्तस्याः, कमलिन्याः पद्मलतायाः, स्तोकमल्पं यथा स्यात्तथा निर्म्मुक्तः त्यक्तजलसंयोगः जलोपरि उत्थित इत्यर्थः कण्ठः

---

আরও, হরিণনয়না শকুন্তলার বল্কলখানি কঠিন হইলেও সুন্দর দেখাইতেছে সুতরাং প্রস্ফুটিতপদ্মসমন্বিত পদ্মিনীর জলোপরি ঈষদুত্থিত কঠিন স্বকীয় বৃন্তসমূহের ন্যায় এই বল্কল, মনে অল্পও অনুরাগের ক্ষতি করিতেছে না ॥২১॥

---

(१) अपि चेति क्वचित् पुस्तके नास्ति।

(२) अयं श्लोकोऽपि क्वचिन्न दृश्यते।

शकु। (अग्रतोऽवलोक्य।) सहीओ! एस वादेरिदपल्लवाङ्गुलीहिं किम्पि वाहरेदि विअ मं चूदरुक्खओ। ता जाव णं सम्भावेमि (१)। इति तथा करोति। (च)

---

(च) सख्यौ! एष वातेरितपल्लवाङ्गुलीभिः किमपि व्याहरतीव मां चूतवृक्षः। तद् यावदेनं सम्भावयामि।

---

पद्मनिबद्धैर्यो यस्य तत्, तथा कर्कशं कठिनम्, निजं स्वकायम्, हन्तशाखं हन्त-वसूह इव, मनसि चित्ते, अल्पमपि रुचिभङ्गम् अनुरागचलितम्, न व्यादधाति न जनयति; अविकारकारित्वादिति भावः।

अत्र श्रौतोपमालङ्कारः। तथा 'तद्गच्छ सिद्ध्यै कुरु देवकार्यम्' इति कुमारसम्भवो-क्तवत् समासाभावे अत्र पदात्रयतो दुःश्रवत्वदोषः; स च 'कठिनमपि मनोज्ञं वल्कलं चारुदृष्टेः' इति पाठेन समाधेयः।

मालिनी वृत्तम् ॥२०॥

(च) शकु इति। हे सख्यौ! एष चूतवृक्ष आम्रतरुः, वातेरिताः वायुसञ्चालिताः पल्लवा एव अङ्गुल्यस्ताभिः, मां किमपि जलम् दातुमिति, भावः, व्याहरतीव वदतीव आकारैरिव स्पष्टं सूचयतीत्यर्थः। तत्तस्मात्, यावदद्याद्याहारि, एनं चूतवृक्षं, सम्भावयामि जलसेचनेन सम्मानयामि। यथा भक्ष्यादिपरिवेषणसमये कश्चिदङ्गुलिसङ्के-तेन आत्मने दातुं परिवेष्टारं प्रबोधयति तद्वदिति भावः।

---

শকুন্তলা। (সম্মুখে দৃষ্টিপাত করিয়া) সখীরা! এই আম্রবৃক্ষ, বায়ুসঞ্চালিত পল্লবরূপ অঙ্গুলী দ্বারা আমাকে যেন কিছু বলিতেছে। তা ইহাকে সম্মানিত করি। (এই বলিয়া তাহাই করিল)

---

(१) एदो वादेरिदपल्लवाङ्गुलीहिं तुवरावेइ विअ मं केसररुक्खओ। जाव णं सम्भावेमि। पडिक्कमामि।

प्रियं । हला सउन्तले ! एथ ज्जेव मुहुत्तमं चिट्ठ (१) । (क)

शकु । किंणिमित्तं ? [ख]

प्रियं । तए समीवट्ठिदाए लदासणाधो विय अयं चूदरुक्खओ पडिहादि । (ग)

(क) हला शकुन्तले ! अत्रैव मुहूर्त्तकं तिष्ठ ।

(ख) किं निमित्तम् ? ।

(ग) त्वया समीपस्थितया लतासनाथ इव अयं चूतवृक्षः प्रतिभाति ।

अतएवास्य कार्य्ये च चूतवृक्षे तादृशजनव्यवहारसमारोपात् समासोक्तिरलङ्कारः निरङ्ग केवलरूपकम् क्रियोत्प्रेक्षा च, इत्थं तेषामङ्गाङ्गिभावेन सङ्करः ।

(क) प्रियमिति । मुहूर्त्तं अल्पकालम् ।

(ख) शकु इति । किं निमित्तं तिष्ठामीति शेषः ।

(ग) प्रियमिति । लतासनाथ इव लतासहित इव ।

अत्र गुणोत्प्रेक्षालङ्कारः । तेन च शकुन्तलायां लतासादृश्यं व्यज्यते इत्यलङ्कारेणालङ्कारध्वनिः ।

প্রিয়ংবদা। ওগো শকুন্তলা! তুই এইখানেই একটু কাল থাক্।

শকুন্তলা। কি নিমিত্ত?

প্রিয়ংবদা। তুমি নিকটে থাকিলে এই আমগাছটীকে লতাযুক্ত বলিয়া মনে হয়।

(१) प्रियंवदा। हला सउन्दलि ! एत्थ एव्व दाव मुहुत्तअं चिट्ठ, तुए उवगदाए लदासणाधो विअ अअं केसररुक्खओ पडिभाइ ।

शकु। अहो ज्जेव तुमं पिअम्वद त्ति भणी-असि (१)। (घ)

राजा। अवितथमाह प्रियंवदा। तथाह्यस्याः(२)। (ङ)

अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम् ॥२२॥

(घ) अतएव त्वं प्रियंवदेति भण्यसे।

(घ) शकु इति। अतएव ईदृशप्रियोक्तिकरणादेव। प्रियोक्तिलव लता बाहू सूचनेन लावण्यकोमलत्वादिसूचनादिति बोध्यम्। भण्यसे परिचितजनैः कथ्यसे।

प्रियं वदतीति। प्रियंवदा "वदेः ख प्रियवशयोः" इति खः।

(ङ) राजेति। अवितथम् अमिथ्या सत्यमित्यर्थः। तत् सत्यत्वं प्रतिपादयितुमाह तथाहीति। अस्याः शकुन्तलायाः। अस्य च अधर इत्यादिना श्लोकस्यैवान्वयः।

अधर इति। अधर ओष्ठः, किसलयस्य पल्लवस्य राग इव रागो रक्तिमा यस्य स तादृशः; बाहू भुजद्वयम्, कोमलयोर्विटपयोः शाखयोः अनुकारिणौ। तथा अङ्गेषु कुसुममिव लोभनीयं हृदयाकर्षकम्, यौवनं सन्नद्धं विधिना निबद्धम्। अतएवैषं सत्यसदृशी, तेन च प्रियंवदा अवितथमेवाहेति भावः।

अत्र प्रथमे पादे लुप्तोपमा, द्वितीये आर्थोपमा, तृतीये च श्रौतोपमा। इत्येतासां परस्परनिरपेक्षतया संसृष्टिः।

শকুন্তলা। এই জন্যই তোমাকে সকলে প্রিয়ংবদা বলে।

রাজা। প্রিয়ংবদা সত্যই বলিয়াছে। তাহার কারণ—

(१) शकुन्तला। अहो त्वम्, प्रियंवदासि त्वम्।

(२) राजा। प्रियमपि तथ्यमाह शकुन्तलां प्रियंवदा। अस्याः खलु।

অন। হলা সউন্তলে! ইঅং সঅম্বরবহূ সহআরস্স তুএ কিদণামহেআ বনদোসিণী ত্তি [১] ণোমালিআ ণং বিসুমরিদাসি। (ঘ)

শকু। তদো অত্তাণম্পি বিসুমরিস্সং। (লতামুপেত্য অবলোক্য চ)

---

(ঘ) হলা শকুন্তলে! ইয়ং স্বয়ম্বরবধূঃ সহকারস্য ত্বয়া কৃত-নামধেয়া বনতোষিণীতি নবমালিকা; এনাং বিস্মৃতাসি?।

---

তথা অধরাদিকোমলাঙ্গানুরূপাণাং কোমলানামিব পদানাং নিবন্ধনাৎ পদোচ্চয়ো নাম নাট্যলক্ষণম্।

"সম্বন্ধোঽর্থানুরূপো যঃ পদানাং স পদোচ্চয়ঃ" ইতি দর্পণাৎ।

লোভয়তীতি লোভনীয়ম "কৃত্যল্যুটোঽন্যত্রাপি" ইতি কর্ত্তর্য্যনীয়ঃ।

আর্য্যা জাতিঃ ॥২২॥

(ঘ) অয়ীতি স্বয়মেব বৃণোতি বরমিতি স্বয়ম্বরা, চাসৌ বধূশ্চেতি স্বয়ম্বরবধূঃ। সহকারস্য আশ্রিতস্য আত্মনঃ, স্বয়ম্বরবধূঃ স্বয়মেব গ্রহণাৎ স্বয়ম্বরবধূরিব স্থিতা। বনং তোষয়তীতি বনতোষিণী ইতি ইদং ত্বয়া কৃতং নামধেয়ং নাম যস্যাঃ সা। এনাং নবমালিকাম্, বিস্মৃতাসি কিং ত্বমিতি শেষঃ।

বিস্মৃতেতি গত্যর্থত্বাৎ কর্ত্তরি বর্ত্তমানে ক্তঃ।

---

ইহার ওষ্ঠযুগল পল্লবের ন্যায় রক্তবর্ণ; বাহুযুগল কোমল শাখার অনুকরণ করিতেছে এবং বিধাতা ইহার অঙ্গে পুষ্পের ন্যায় লোভনীয় যৌবন নিবদ্ধ করিয়াছেন ॥২২॥

অনসূয়া। ওলো শকুন্তলা! এই নবমালিকা লতাটি আম্রগাছটির স্বয়ম্বর বধূর ন্যায় রহিয়াছে, তুমি ইহার 'বনতোষিণী' এইরূপ নাম করিয়াছ; তা ইহাকে বিস্মৃত হইলে?।

---

(১) বণজোসিণী।

হলা! রমণীও ক্খু কালো ইমস্স পাদবমিহুণস্স বইঅরো (১) সংবুত্তো। জেণ ণবকুসুমজোব্বণা ণোমালিআ (২) অঅং পি বদ্ধফলদাএ (৩) উবভোঅক্খমো সহআরো।

ইতি পশ্যন্তী তিষ্ঠতি। (ক)

---

(ক) তত্র আত্মানমপি বিস্মরিষ্যামি। হলা! রমণীয়ঃ খলু কালঃ অস্য পাদপমিথুনস্য রতিকরঃ সংবৃত্তঃ। যেন নবকুসুমযৌবনা নবমালিকা, অয়মপি বদ্ধফলতয়া উপভোগক্ষমঃ সহকারঃ।

---

(ক) তত্র ইতি। ততস্তদা অস্যা নবমালিকায়া বিস্মরণে ইত্যর্থঃ। তথা চৈবং নবমালিকা মদাত্মসদৃশী; তেনাত্মা যথা বিস্মরণযোগ্যস্তথা ইয়মপীতি ইদানী-মেবৈনাং সিঞ্চামীতি ভাবঃ। লতামুক্তা নবমালিকাম্। পাদপমিথুনস্য পাদপ-জাতীয়দ্বয়স্য নবমালিকাসহকারয়োরিত্যর্থঃ, রতিকরঃ সৌন্দর্য্যাৎ লোকানুরাগজনকঃ সুরতঘটকশ্চ। নবং কুসুমং পুষ্পং রজশ্চ যস্মিন্ তথাভূতং যৌবনং তারুণ্যং যস্যাঃ সা। বদ্ধানি ফলানি যাস্মকালত্বাদাম্রাণি লাভায় যস্য তস্য ভাবস্তয়া হেতুনা, উপভোগক্ষমঃ লোকানাং ভোগযোগ্য সম্ভোগসমর্থশ্চ। পশ্যন্তী সাভিলাষমিতি শেষঃ। এতেনাত্মনোঽপি তাদৃশসম্বন্ধেচ্ছা ব্যজ্যতে।

---

শকুন্তলা। তাহা হইলে আপনাকেও বিস্মৃত হইব। (লতার নিকটে যাইয়া দেখিয়া) ওলো! এই তরুলতা দুইটীর এই সময়টী বড়ই মনোহর ও রুচিকর হইয়াছে। যেহেতু নবমালিকা নব-কুসুম-যৌবনা, আর এই আমগাছটীও বহুফলশালী বলিয়া উপভোগ যোগ্য। (এই বলিয়া দেখিতে লাগিল)

---

(১) রমণীএ ক্খু কালে ইমস্স লদাপাদবমিহুণস্স বইঅরো।

(২) বণজোসিণী।

(৩) বদ্ধপল্লবদাএ।

पियं । (विहसिअ) अणसूए ! जाणासि किंणिमित्तं सउन्तला वणदोसिणीं अदिमेत्तं पेक्खदि त्ति (१) । (ज)

अन । ण क्खु विभावेमि, ता कधेहि मे [२] । (झ)

---

(ज) अनसूये ! जानासि किं निमित्तं शकुन्तला वनतोषिणी-मतिमात्रं प्रेक्षत इति ।

(झ) न खलु विभावयामि , तत् कथय मे ।

---

अत्र नवमालिकासहकारयोर्लिङ्गसाम्येन स्त्रीपुंसयोर्व्यवहारसमारोपात् समासोक्ति-रलङ्कारः । तथा लतापादपरूपसिद्धार्थेन सह मानुषदम्पतिरूपासिद्धार्थस्य प्रकाशनात् श्लिष्टविचित्रार्थं वस्तुन शोभा नाम नाट्यलक्षणम् ।

"सिद्धैरर्थैः समं यत्राप्रसिद्धोऽर्थः प्रकाशते ।

श्लिष्टलक्षणचित्रार्था सा शोभेत्यभिधीयते ॥" इति दर्पणलक्षणात् ।

"कुसुमं स्त्रीरज पुष्पम्" । "फलं जातीफले लाभे बाणाग्रे फलकेऽपि च" इति च त्रिकाण्डशेषः । "भोगः सुखे स्त्र्यादिभृतावहेश्च फणकाययोः" इत्यमरः ।

(ज) प्रियमिति । अतिमात्रमेकान्तम् । प्रेक्षते पश्यति ।

(झ) अनेति । विभावयामि विभाव्यापि सम्यग्धारयामि ।

---

প্রিয়ংবদা । (ঈষৎ হাস্য করিয়া) অনসূয়া ! জানিস্ কিজন্য শকুন্তলা বনতোষিণীকে এত বেশী দেখিতেছে ?

অনসূয়া । আমি বুঝিতেছি না ; তা আমায় বল দেখি ।

---

[१] ··· किं वणदोसिणीं ।

[२] ता कधेहि ।

प्रियं। जह वणदोसिणी अणुरूवेण पादवेण सङ्गदा, तह अहम्मि अत्तणो अणुरूवं वरं लहेअं त्ति (१)। (ञ)।

शकु। एस दे अत्तणो चित्तगदो मणोरहो। इति कलस-मावर्जयति (२)। (ट)

अन। हला सउन्तले! इअं तादकण्णेण तुमं विअ सहत्थेण सम्वड्ढिदा माहवीलदा, ता कधं इमं विसुमरिदासि ? (३)। (ठ)

---

(ञ) यथा वनतोषिणी अनुरूपेण पादपेन सङ्गता, तथा अहमपि आत्मनः अनुरूपं वरं लभेय इति।

(ट) एष ते आत्मनश्चित्तगतो मनोरथः।

(ठ) हला शकुन्तले! इयं तातकण्वेन त्वमिव स्वहस्तेन संवर्द्धिता माधवीलता, तत् कथमिमां विस्मृतासि ?।

---

(ञ) प्रियमिति। अनुरूपेण स्वयोग्येन। सङ्गता सम्मिलिता। इति ईतोः, अतिमात्रं प्रेक्षत इति पूर्वेणान्वयः।

(ट) शकु इति। आत्मनः स्वस्यैव। मनोरथः अभिलाषः। त्वमेवानुरूपं वरं लब्धुमिच्छसीति भावः। आवर्जयति न्युब्जीकरोति।

---

প্রিয়ম্বদা। বনতোষিণী যেমন অনুরূপ বৃক্ষের সহিত মিলিয়াছে, আমিও সেইরূপ নিজের অনুরূপ বর লাভ করিব।

শকুন্তলা। ইহা তোর নিজের মনোগত ইচ্ছা। (এই বলিয়া কলস ন্যুব্জ (উবুড়) করিল)

---

[१] वणजोसिणी। अवि णाम एव्वं अहम्मि ... ।

[२] एसो णूणं तुह अत्तगदो।

[३] इत्यारभ्य पुनः कलसमावर्जयतीत्यन्तः पाठसन्दर्भो विद्यासागरेण परित्यक्तः।

শকু। তদো অত্তাণম্পি বিসুমরিস্সং। লতামুপেত্যাবলোক্য চ সহর্ষম্। অচ্চরীঅং অচ্চরীঅং, পিঅম্বদে! পিঅং দে ণিবেদেমি। (ড)

প্রিয়ং। সহি! কিং মে পিঅং?। (ঢ)

শকু। অসমএ ক্খু এসা আমূলাদো মুউলিদা মাহবীলদা। (ণ)

---

(ড) তত আত্মানমপি বিস্মরিষ্যামি। আশ্চর্য্যমাশ্চর্য্যম্, প্রিয়ংবদে! প্রিয়ং তে নিবেদয়ামি।

(ঢ) সখি! কিং মে প্রিয়ম?।

(ণ) অসময়ে খল্বেষা আমূলাৎ মুকুলিতা মাধবীলতা।

---

[ঠ] অনেতি। বিস্মৃতাসীতি স্বরবিকারেণ প্রশ্নো ব্যজ্যতে।

(ড) শকু ইতি। তত ইত্যনেন মাধবীলতাপি আত্মতুল্যেতি ব্যজ্যতে। লতা মাধবীলতাম্।

(ণ) শকু ইতি। মুকুলানি অস্যাঃ সঞ্জাতানীতি মুকুলিতা তারকাদিত্বাদিতচ্ প্রত্যয়ঃ।

---

অনসূয়া। ওলো! শকুন্তলা! পিতা কণ্ব তোমার ন্যায় এই মাধবী লতাটিকে নিজহস্তে সংবর্দ্ধিত করিয়াছেন; তা ইহাকে বিস্মৃত হইলে কেন?।

শকুন্তলা। তা হইলে আপনাকেও বিস্মৃত হইব। (লতার নিকটে যাইয়া এবং দেখিয়া আনন্দের সহিত) আশ্চর্য্য আশ্চর্য্য! প্রিয়ংবদে! তোর প্রীতিকর বিষয় জানাইতেছি।

প্রিয়ংবদা। সখি! আমার প্রীতিকর বিষয় কি?।

শকুন্তলা। এই মাধবীলতা, অকালে মূল হইতে মুকুলিত হইয়াছে।

उभे। सानन्दमुपगम्य। सहि! सच्चं सच्चं?। [त)

शकु। सच्चं किं ण पेक्खध। [थ)

प्रियं। सहर्षं निरूप्य। सहि! तेण हि पड़िप्पिअं दे णिवे-देमि [द]

शकु। किं मे पड़िप्पिअं?। (ध)

प्रियं। आसण्णपाणिग्गहणासि तुमं। [न]

शकु। सासूयमिव। एस दे अत्तणो चित्तगदो मणोरहो, ता ण दे वअणं सुणिस्सं। (प)

---

(त) सखि! सत्यं सत्यम्?।

(थ) सत्यं किं न प्रेक्षेथे।

(द) सखि! तेन हि प्रतिप्रियं ते निवेदयामि।

(ध) किं मे प्रतिप्रियम्?।

(न) आसन्नपाणिग्रहणासि त्वम्।

(प) एष ते आत्मनश्चित्तगतो मनोरथः, तन्न ते वचनं श्रोष्यामि।

---

(त) उभे इति। अत्र काकुवशात् प्रश्नो व्यज्यते।

(न) प्रियमिति। आसन्नं निकटवर्त्ति पाणिग्रहणं विवाहो यस्याः सा॥

---

অনসূয়া ও প্রিয়ংবদা। (সখীর নিকটে যাইয়া) সখি! সত্য সত্য কি?।

শকুন্তলা। সত্য কিনা দেখ।

প্রিয়ংবদা। (আনন্দের সহিত দেখিয়া) সখি! তবে তোমার প্রীতিকর বিষয় জানাইতেছি।

শকুন্তলা। আমার কি প্রীতিকর বিষয়?

প্রিয়ংবদা। তোমার বিবাহ নিকটবর্ত্তী হইয়াছে।

प्रियं। सहि ! ण क्खु परिहासेण भणामि, सुदं मए तादकस्सवस्स मुहादो तुह कल्लाणसूअअं एदं णिमित्तं त्ति। (फ)

अन। हला पिअम्बदे ! अदो ज्जेव सविसेसं सउन्तला माहवीलदं सिञ्चदि। (ब)

शकु। अदो बहिणी मे होदि, तदो किं त्ति ण सिञ्चेमि। इति आलवालमावर्जयति। (भ)

---

(फ) सखि ! न खलु ते परिहासेन भणामि, श्रुतं मया तातकाश्यपस्य मुखात् तव कल्याणसूचकम् एतन्निमित्तमिति।

(ब) हला प्रियंवदे ! अतएव सविशेषं शकुन्तला माधवीलतां सिञ्चति।

(भ) यतो भगिनी मे भवति, ततः किमिति न सिञ्चामि।

---

(प) शकु इति। सासूयामिव मुखभङ्ग्या बहिरसूयां प्रकाश्य। एतेन पतिविषयकाकाङ्क्षा सूचिता। तदभ्यात् स्वाकाङ्क्षायाः परोपरि प्रवर्त्तनादित्यर्थः।

(फ) प्रियमिति। परिहासेन परिहासकरणेच्छया। एतत् माधवीलताया अस्मये मुकुलितस्वरूपं निमित्तं लक्षणम्, कल्याणसूचकं पतिप्राप्तिरूपमङ्गलज्ञापकम्।

(भ) शकु इति। भगिनी एकेनैव कर्त्रा परिवर्द्धिततया भगिनी तुल्यत्वात् भगिनी, इयं माधवीलतेति शेषः। आवर्जयति जलसेकार्थं न्युब्जीकरोति।

---

শকুন্তলা। (অসূয়ার সহিতই যেন) ইহা তোর নিজের মনোগত ইচ্ছা; তা তোর কথা আমি শুনিব না।

প্রিয়ংবদা। সখি! পরিহাস করিয়া বলিতেছি না। আমি পিতা কণ্বের মুখ হইতে শুনিয়াছি যে, এই লক্ষণটী তোমার মঙ্গলসূচক।

অনসূয়া। ওলো প্রিয়ংবদা! এই জন্যই শকুন্তলা স্নেহের সহিত মাধবীলতাটিকে সিক্ত করিতেছে।

राजा। अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा भवेत्? [१]। अथवा कृतं सन्देहेन। (म)

असंशयं क्षत्रपरिग्रहक्षमा
यदार्य्यमस्यामभिलाषि मे मनः।

---

(म) राजेति। अपिशब्दः प्रश्ने। नामशब्दः सम्भावनायाम्। इति सम्भावयितुमर्हामि किमित्यर्थः। तथा च इयं शकुन्तला, कुलपतेः कण्वस्य, असवर्णम् असमान-वर्णं ब्राह्मणजातीयभिन्नं यत् क्षेत्रं कलत्रं तत्र सम्भव उत्पत्तिर्यस्याः सा तादृशी भवेत्। तथा च इयं यदि ब्राह्मणस्य कण्वस्य क्षत्रियादिजातीयपत्नीगर्भजाता कन्या भवेत्, तदा मे परिणययोग्या स्यात्, ब्राह्मणजातीयपत्नीगर्भजातत्वे तु प्रतिलोमविवाह-निषेधात् अस्या आशापि निष्फलैवेति भावः। कृतमलम्।

कुलपतिमाहुः शाब्दिकाः। यथा—

'मुनीनां दशसाहस्रं योऽन्नदानादिपोषणात्।
अध्यापयति विप्रर्षिः स वै कुलपतिः स्मृतः॥'

कण्वस्य असवर्णक्षेत्रसम्भवाया दुष्मन्तस्य परिणययोग्यत्वे प्रमाणं यथा मनुः—

'पुत्रा येऽनन्तरस्त्रीजाः क्रमेणोक्ता द्विजन्मनाम्।
ताननन्तरनाम्नस्तु मातृदोषात् प्रचक्षते॥"

"क्षेत्रं शरीरे केदारे सिद्धस्थानकलत्रयोः" 'क्षत' युगेऽलमय च" इत्यादि च मेदिनी।

---

শকুন্তলা। যে হেতু আমার ভগিনী হয়, সেই হেতু সিক্ত করিব না কেন? (এই বলিয়া কলস উদ্যত করিল)

রাজা। এই শকুন্তলা কি কুলপতি কণ্বের অসবর্ণ স্ত্রীর গর্ভজাত সন্তান হইবেক? অথবা সন্দেহের প্রয়োজন নাই। (কারণ)

---

(१) स्यात्।

सतां हि सन्देहपदेषु वस्तुषु

प्रमाणमन्तःकरणप्रवृत्तयः ॥२३॥

तथापि तत्त्वत एवैनामुपलप्स्ये [१] । [य]

असंशयमिति । असंशयं ध्रुवमेव, क्षत्रस्य क्षत्रियजातेः परिग्रहक्षमा पत्नीत्वेन ग्रहणयोग्या, इयं शकुन्तलेति शेषः । यद् यस्मात्, आर्य्यं चिरसत्पथगामित्वात् साधुभूतम्, मे मम मनः, अस्यां शकुन्तलायाम्, अभिलाषि एतद्विषयाकाङ्क्षाशालि वर्त्तत इति शेषः । ननु मनसः अभिलाषित्वमात्रेण कथं क्षत्रपरिग्रहक्षमेति निर्णीयत इत्याह सतामिति । हि यस्मात्, सन्देहपदेषु संशयविषयेषु, वस्तुषु पदार्थेषु, सतां सज्जनानाम्, अन्तःकरणस्य मनसः, प्रवृत्तयो गतय एव प्रमाणम् एकतरनिश्चायिकाः । तथा चास्यां शकुन्तलायां मन्मनसो गतत्वेन तद्विषयत्वात् क्षत्रस्येयं परिग्रहक्षमैवेति भावः ।

अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः । तथा राज्ञः शकुन्तलानुरागरूपकार्य्यस्यात्र निश्चयेनोपस्थितेः परिन्यासो नाम मुखसन्ध्यङ्गम् । तथा च दर्पणः—

"तन्निष्पत्तिः परिन्यासः ।"

संशयस्याभावः असंशयम्, अभावार्थे अव्ययीभावः । "वेदाः प्रमाणम्" इत्यादिवदत्रापि द्वयोः सामानाधिकरण्येऽपि अजहल्लिङ्गत्वात् भिन्नलिङ्गत्वं बहुत्वावच्छिन्नप्रवृत्तीनामेकप्रमाणत्वाच्च भिन्नवचनत्वम् ।

"आर्य्यं साध्वी मौ वदन्ते" इत्यादि हैमः । वंशस्थविलं वृत्तम् ॥२३॥

इँनि (शकुन्तला), निश्चयई क्षत्रियेर ग्रहणयोग्या ; ये हेतु आमार निर्दोष मन इँहार प्रति अभिलाषी हइयाछे। कारण, सन्दिग्ध विषये सज्जनेर मनेर प्रवृत्तिई प्रमाण ॥२३॥

(१) तत्त्वत एनाम ।

शकु। ससम्भ्रमम्। अम्म! सलिलसेअसम्भमुग्गदो णोमालिअं उज्झिअ वअणं मे महुअरो अहिवट्टदि। इति भ्रमरबाधां नाटयति (१)। (ग)

राजा। सस्पृहं विलोक्य। साधु बाधनमपि रमणीयमस्याः (२)। (घ)

---

(ग) सलिलसेकसम्भ्रमोद्गतो नवमालिकां उज्झित्वा वदनं मे मधुकरोऽभिवर्त्तते।

---

(ख) तथापीति। अन्तःकरणप्रवृत्तिप्रमाणेन अस्मत्परिग्रहक्षमत्वनिश्चयेऽपीत्यर्थः। तत्त्वत एव शब्दादिप्रमाणान्तरैर्यथार्थत एव, एनां शकुन्तलाम्, उपलप्स्ये ज्ञास्यामि; अन्तःकरणप्रवृत्तिमात्रप्रमाणस्य कदाचित् व्यभिचारस्यापि दर्शनादिति भावः।

(ग) शकु इति। ससम्भ्रमम् आकुलभावेन सहितम्। अम्म इति विस्मये। सलिलसेकेन जलसेचनेन यः सम्भ्रमो व्यस्तता तेन उद्गत उड्डीनः, मधुकरो भ्रमरः, नवमालिकाम् उज्झित्वा परित्यज्य, मे मम वदनं अभिवर्त्तते लक्षीकृत्य आगच्छतीत्यर्थः। भ्रमरस्य बाधा दूरीकरणम्।

(घ) राजेति। सस्पृहं शकुन्तलाकाङ्क्षासहितम्। साधु समीचीनम्, बाधनं भ्रमरदूरीकरणम्। अस्याः शकुन्तलायाः।

---

তথাপি যথার্থরূপেই ইহাঁকে জানিব।

শকুন্তলা। (ব্যস্ততার সহিত) ওমা! জলসেকে ব্যস্ততাবশতঃ একটা ভ্রমর উড়িয়া, নবমালিকাকে পরিত্যাগ করিয়া, আমার মুখের দিকে আসিতেছে।

---

(१) भ्रमरबाधां रूपयति।

(२) वदनमवलोक्य।

यतो यतः षट्चरणोऽभिवर्त्तते
ततस्ततः प्रेरितवामलोचना ।
विवर्त्तितभ्रूरियमद्य शिक्षते
भयादकामापि हि दृष्टिविभ्रमम् [1] ॥२४॥

---

भ्रमरबाधनस्य रमणीयत्वे हेतुमाह यत इति । हि तथाहि । षट् चरणाः पादा यस्य स षट्चरणो भ्रमरः, यतो यतः यस्यां यस्यां दिशि, अभिवर्त्तते मुखं अभ्यागत्य तिष्ठति । यतो यतः यस्या यस्या दिशः सकाशात् मुखमभ्यागच्छतीति वा । ततस्ततः तस्यां तस्यां दिशि, प्रेरिते निक्षिप्ते वामे मनोहरे लोचने नयनद्वयं यया सा, तथा विवर्त्तिते मुहुः परिवर्त्तिते भ्रुवौ यया सा तादृशी, इयं शकुन्तला, अकामापि कारणाभावात् कामप्रवृत्तिरहितापि सती, भयात् भ्रमरदंशनत्रासात्, अद्य इदानीम्, दृष्टिविभ्रमं नायके स्वमनोऽभिज्ञापकं दृष्टिविलासम्, शिक्षते ज्ञातुमारभत इत्यर्थः ।
दृष्टिविभ्रमं प्रति सकामत्वमेव कारणम् । तेन चात्र तत्सकामत्वरूपकारणाभावेऽपि दृष्टिविभ्रमरूपकार्योत्पत्तिसत्त्वात् विभावनालङ्कारः ; सा च भयादित्यभिधानादुक्तनिमित्ता ; तथा शिक्षते इति सम्भावनावगमेऽपि नन्वाद्यविशब्दाभावात् प्रतीयमाना भावाभिमानिनी क्रियोत्प्रेक्षालङ्कारः । अनयोर्मिथो निरपेक्षतया संसृष्टिः ।
'वामं मनोज्ञे प्रतीपे च द्रविणे चातिसुन्दरे' इत्यादि विश्वः ।
वंशस्थविलं वृत्तम् ॥२४॥

---

রাজা । (স্পৃহার সহিত দেখিয়া) ভাল, বাধা দেওয়াও ইহাঁর সুন্দর বটে । (কারণ)
ভ্রমরটা যে যে দিক হইতে আসিতেছে, সেই সেই দিকে সুন্দর নয়নযুগল নিক্ষেপ করিতেছেন এবং ভ্রূদুইটী ঘুরাইতেছেন । সুতরাং

(1) श्लोकोऽयं विद्यासागरेण प्रकाशिते नास्ति ।

অপি চ। সাসূয়মিব। [ঘ]

চলাপাঙ্গাং দৃষ্টিং স্পৃশসি বহুশো বেপথুমতীং
রহস্যাখ্যায়ীব স্বনসি মৃদু কর্ণান্তিকচরঃ।
করং [১] ব্যাধুন্বত্যাঃ পিবসি রতিসর্বস্বমধরং
বয়ং তত্ত্বান্বেষান্মধুকর! হতাস্ত্বং খলু কৃতী ॥২৫॥

---

(ঘ) অপি চেতি। সাসূয়মিব স্বং বিনা ভ্রমরস্য শকুন্তলাস্পর্শনাৎ স্বস্যাস্পর্শনাৎ তাং দৃষ্ট্বা সাসূয়ং ভণিতমিব।

চলেতি। হে মধুকর! ভ্রমর! করং হস্তম্, ব্যাধুন্বত্যা ভ্রমরবারণার্থমিত-স্ততঃ সঞ্চালয়ন্ত্যাঃ শকুন্তলায়াঃ, বেপথুমতীং ভয়াদেব কামবেগাৎ কম্পান্বিতাম্, অতএব চলাপাঙ্গাং চঞ্চলঃ অপাঙ্গঃ প্রান্তভাগো যস্যাস্তাম্, দৃশ্যতেঽনয়েতি দৃষ্টির্নয়নং তাম্, বহুশো বারং বারম্, স্পৃশসি দংশনার্থমিত্যর্থঃ, অন্যত্র তু চুম্বসি। রহস্যং গোপনীয়বিষয়ম্ আচষ্টে ইতি রহস্যাখ্যায়ী স ইব, কর্ণান্তিকচরঃ কর্ণসমীপগামী সন্, মৃদু কোমলং ক্ষুদ্রমিত্যর্থঃ, স্বনসি শব্দায়সে অন্যত্র তু ব্রবীষি। তথা রতিসর্বস্বং সুরতস্য সর্বসম্পৎস্বরূপম্, অধরমোষ্ঠম্, পিবসি দশসি, অন্যত্র চুম্বসি। অতএব ধন্যম্ এতদিত্যর্থঃ, তত্ত্বান্বেষাৎ 'কস্যেয়ং কন্যা মম পরিণেয়া ন বা' ইতি তথ্যানু-সন্ধানাৎ তদাশ্রয়িত্বাৎ বয়ং, হতা বঞ্চিতাঃ এবং মনোরথা ইতি ন সফলম্, কিন্তু ত্বং খলু নিশ্চিতং কৃতী কর্মকুশলঃ।

---

শকুন্তলা আমার প্রতি প্রেমশূন্যা হইয়াও, ভাবতঃ দৃষ্টিবিলাস শিক্ষা করিতেছেন।২৪।

আরও, (অসূয়ার সহিতই যেন)

হে ভ্রমর! শকুন্তলা হস্ত সঞ্চালন করিতেছেন, এদিকে তুমি উঁহার চঞ্চলপ্রান্তসমন্বিত চঞ্চলনয়ন বার বার স্পর্শ করিতেছ, গুপ্তবার্তার

---

(১) করী।

तुरग-खुर-हतस्तथाहि रेणु-
र्विटप-विषक्त-जलार्द्र-वल्कलेषु।
पतति परिणतारुणप्रकाशः
शलभसमूह इवाश्रमद्रुमेषु ॥३४॥

---

मृग्यते अन्विष्यते इति मृगया, मृग अन्वेषणे इति चौरादिकस्वार्थे णिजन्तात् मृगधातोः 'धातुवन्ध भिदादिभ्यस्त्वङ्' तत्र च संज्ञापूर्वकविधेरनित्यत्वात् कारितलोपाभावः गणपाठसामर्थ्याच्च गुणः। तथा च तत्रोक्तम् "गुणश्चाद्यादिकमर्थाविशेषश्च गणपाठ सामर्थ्यात्।"

तुरगेति। "तथाहि तमेवाय' आनीहि" इति कातन्त्रपरिशिष्टटीकायां गोपीनाथः। तुरगाणां दुष्मन्तसैन्यानां तपोटकानाम्, खुरैः हतः उत्थापितः, परिणतः अस्तगमनपूर्वकालीनः यः अरुणः सूर्यः तस्य प्रकाश इव प्रकाशः प्रभा यस्य स तथोक्तः लोहितवर्ण इत्यर्थः। एतेन गैरिकसान्निध्यत्वं रेणोः सूचितम्। रेणुः धूलिः शलभसमूह इव पतङ्गनिकर इव, पतङ्गानामपि पक्षलौहित्येन लौहित्यप्रायत्वादिति द्रष्टव्यम् विटपेषु शाखासु विषक्तानि संलग्नानि जलार्द्राणि स्नानानन्तरतत्तच्छोषणाय विषक्तितत्वात् जलक्लिन्नानि वल्कलानि येषां तेषु, आश्रमद्रुमेषु तपोवनतरुषु, पतति उड्डीय संसजति। बालाश्चैन तदुत्थापितत्वासम्भवात् तुरगाणां गाथायां सम्भवात् एतद् अस्य दुष्मन्ताधिष्ठिततया दुष्मन्ततुरगखुरहत एवायं रेणुरिति स एव मृगयार्थमागत इति तपोवनसंरक्षणाय सन्नद्धीभवन्तु भवन्त इति भावः।

---

তাহাই দেখুন, অশ্বখুরোত্থাপিত অস্তগমনের পূর্ব্বকালীন সূর্য্যের ন্যায় রক্তবর্ণ ধূলিসমূহ পতঙ্গ সমূহের ন্যায় আশ্রমের বৃক্ষসমূহে পতিত হইতেছে, যে সকল বৃক্ষের শাখায় জলস্তিমিত বল্কল সকল সংলগ্ন করিয়া রাখা হইয়াছিল ।৩৪।

राजा। स्वगतम्। अहो धिक्! अस्मदन्वेषिणः सैनिकास्तपोवनमभिरुन्धन्ति (१)। [ख]

पुनर्नेपथ्ये। भो भोस्तपस्विनः! पर्याकुलयन् वृद्ध-स्त्री-कुमारान् एष गजः प्राप्तः [२]। [ग]

तीव्राघातादभिमुखतरुस्कन्धभग्नैकदन्तः
प्रौढाकृष्टप्रततिवलयासङ्गसञ्जातपाशः।

---

अत्र परिणतारुणप्रकाश इति लुप्तोपमा, शलभसमूह इवेति च श्रौतोपमा, अनयोश्च परस्परनिरपेक्षतया संसृष्टिरलङ्कारः।

पुष्पिताग्रा वृत्तम् "अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रा इति लक्षणात् ॥२४॥

(ख) राजेति। अहो इति विषादे। धिगिति निन्दायाम्। तपोवनावरोधाय प्रायेण सैन्यानां निषेधाकरणात् अविमृश्यकारितया आत्मानं निन्दतीत्यर्थः। अभिरुन्धन्ति परिवेष्टन्ते परिवेष्टय पीडयन्तीत्यर्थः।

"अहो धिगर्थे शोके च करुणार्थविषादयोः। सम्बोधने प्रशंसायां विस्मये पादपूरणे। असूयायां वितर्के स्यात्" इति मेदिनी।

(ग) पुनरिति। पर्याकुलयन् भासेन व्यतिव्यस्तौ कुर्वन्। प्राप्त उपस्थितः।

तीव्रेति। तीव्राघातात् दृढप्रहारात्, अभिमुखस्य सम्मुखवर्त्तिनः तरोः स्कन्धस्य

---

রাজা। (স্বগত) হায়! আমার অন্বেষণকারী সৈন্যগণ আসিয়া তপোবন অবরোধ করিয়াছে।

আবার নেপথ্যে। ওহে ওহে তপস্বিগণ! বালক, বৃদ্ধ ও স্ত্রী-লোকদিগকে আকুল করতঃ এই একটা হাতী উপস্থিত হইয়াছে।

---

(१) अयं पाठो विद्यासागरेण परित्यक्तः।

(२) एष पाठोऽपि तेन परिहृतः।

मूर्त्तो विघ्नस्तपस इव नो भिन्नसारङ्गयूथो
धर्म्मारण्यं विरुजति गजः स्यन्दनालोकभीतः (१)॥३५॥

सर्वाः । श्रुत्वा ससम्भ्रमम् उत्तिष्ठन्ति [२] । [अ]

---

स्कन्धदेशे भग्न एकोदन्तो यस्य स तथोक्तः प्रौढमन्यन्तं यथा स्यात्तथा आकृष्टं यत् व्रततिवलयं लतामण्डलं तस्य आसञ्जनात् संसक्तत्वात् जातः पाशो बन्धनं यस्य सः; भिन्नं भयोत्पादनेन पृथक्कृतं सारङ्गयूथं हरिणसमूहो येन सः; तथा स्यन्दनालोकात् राजरथागतरथदर्शनात् भीतः, मूर्त्तो मूर्त्तिमान् तपसो विघ्न इव, तपसो-ऽपादनेन तपोभङ्गकारणादिति भावः, गजः कश्चित् वन्यहस्ती, नः अस्माकम्, धर्म्मारण्यं तपोवनम्, विरुजति उत्पीड़यति ।

अत्र बाध्या बाधाभिमानिनो विघ्नत्वोत्प्रेक्षालङ्कारः । तथा विरुजति गज इत्य-कर्मकैव वाक्यसमाप्तौ पुनरर्थ उक्तस्य विशेषणतया स्यन्दनालोकभीत इत्यस्योपादानात् "पतन्ति अपि नः पादा भासयन्तः समाप्तकम्" इति दर्पणोदाहृतवत् समाप्तपुनरात्त-दोषः; स च 'विरुजति रथालोकभीतः करीन्द्रः' इति पाठेन समाधेयः ।

मन्दाक्रान्ता वृत्तम् "मन्दाक्रान्ताम्बुधिरसनगैर्मो भनौ तौ ग्युग्मम्" इति लक्ष-णात् ॥३५॥

---

তীব্র আঘাত করায় সম্মুখবর্ত্তী বৃক্ষের স্কন্ধদেশে একটী দন্ত ভগ্ন হইয়া রহিয়াছে গুরুতর আকর্ষণ করায় বলয়াকারে লতা সংলগ্ন হইয়াছে বলিয়া চরণে বন্ধন হইয়া পড়িয়াছে এবং হরিণসমূহকে বিচ্ছিন্ন করি-য়াছে ; এই অবস্থায় হাতীটা রথদর্শনে ভীত হইয়া, তপস্যার মূর্ত্তিমান্ বিঘ্নের ন্যায় আমাদের তপোবন উৎপীড়িত করিতেছে ॥৩৫॥

---

(१) तीव्राघातप्रतिहततरुः स्कन्धलग्नैकदन्तः पादाकृष्टव्रततिवलयासङ्गसञ्जात-पाशः ।...। धर्म्मारण्यं प्रविशति गजः...।

(२) सर्वाः । कर्णं दत्त्वा किञ्चिदिव सम्भ्रान्ताः ।

राजा । स्वगतम् । अहो धिक् ! कथमपराद्धस्तपस्विनामस्मि । भवतु, प्रतिगच्छामि तावत् [१] । [ष]

सख्यौ । महाभाअ ! इमिणा हत्थिसम्भमेण पज्जाउला म्ह । ता अणुजाणीहि णो उडअगमणे [२] । [स]

(स) महाभाग ! अनेन हस्तिसम्भ्रमेण पर्य्याकुलाः स्मः । तदनुजानीहि न उटजगमने

(श) सर्वा इति । ससम्भ्रमं सत्वरम्, उत्तिष्ठन्ति गृहगमनायेति शेषः ।

(ष) राजेति । अहो धिगिति पूर्ववदेव व्याख्यानम् । तपस्विनाम् समीप इति शेषः, अपराद्धः अपराधी अस्मि, विना कारणं क्षतिकरणादिति भावः । भवतु तदपराद्धत्वमिति शेषः । प्रतिगच्छामि सैन्यान्तिकमेव प्रत्यावर्त्ते ; तन्निवर्त्तनायेत्याशयः ।

(स) सख्याविति । हस्तिनः सम्भ्रमेण संवेगेन उपद्रवेणेत्यर्थः । पर्य्याकुला अतिव्यस्ताः । नः अस्मान् । उटजगमने पर्णशालायां गमने ।

সকলে (শুনিয়া সত্বর গাত্রোত্থান করিল)

রাজা। (স্বগত) হায়! আমি তপস্বীদিগের নিকটে অপরাধী হইলাম। হউক,, ফিরিয়া যাই দেখি।

সখীদ্বয়। মহাশয়! আমরা এই হস্তীর উপদ্রবে পর্য্যাকুল হইয়া পড়িয়াছি। সুতরাং পর্ণশালায় যাইবার জন্য আমাদিগকে অনুমতি করুন।

(१) राजा । आत्मगतम् । अहो धिक् ! पौरा अस्मदन्वेषिणस्तपोवनमुपरुन्धन्ति । भवतु, प्रतिगमिष्यामस्तावत् ।

(२) अनसूया । अज्ज ! इमिणा आरण्णअवुत्तन्तेण पज्जाउला म्ह । अणुजाणाहि णो कुडअगमणस्स ।

अन। शकुन्तलां प्रति। हला सउन्तलि! पज्जाउला अज्जा गोदमी भविस्सदि, ता एहि सीग्घं एकत्था होम्ह (१)। (ङ)

शकु। गतिरोधं रूपयित्वा। हद्धी हद्धी! ऊरुत्थम्भविव्भलम्हि संवुत्ता (२)। [च]

---

(ङ) हला शकुन्तले! पर्य्याकुला आर्य्या गौतमी भविष्यति, तदेहि शीघ्रमेकस्था भवामः।

(च) हाधिक् हाधिक्। ऊरुस्तम्भविह्वलास्मि संवृत्ता।

---

(ङ) अनेति। पर्य्याकुला अस्माकं वृत्तान्तमप्राप्य उद्विग्नचित्ता। एकस्था उटजद्वारैकस्थानस्थिताः।

(च) शकु इति। गतिरोधं गमनव्याघातम्, रूपयित्वा अभिनीय। हाधिगित्यं-शमेवाव्ययम् विशेषविषादसूचकम्, तस्यातिशये द्विरुक्तिः। एकस्मिन् स्थाने बहुकालं यावदेकभावेनावस्थाने रक्तादीनां गमनागमनबन्धात् अङ्गानां स्तम्भो भवतीति सर्व्वेषा-मेवानुभवविषयः। शकुन्तलाया अपि तत्रैकभावेनोपवेशनात् ऊरुस्तम्भ इति बोध्यम्। ऊरुस्तम्भेन विह्वला व्याकुला। इतः शीघ्रगमनमावश्यकम्, इतश्च ऊरुस्तम्भात् चरणो न चलतीति द्वैविध्यात् भावः।

---

অনসূয়া। (শকুন্তলার প্রতি) ওলো শকুন্তলা! আর্য্যা গৌতমী ব্যস্ত হইবেন, তা আইস আমরা সকলে শীঘ্র একত্র হই।

শকুন্তলা। (গতিরোধ অভিনয় করিয়া) হায়! হায়! উরুস্তম্ভ-বশতঃ আমি বিহ্বলা হইয়াছি।

---

(१) अयं पाठः क्वचिन्नास्ति।

(२) एष पाठोऽपि क्वचिन्न दृश्यते।

राजा। स्वैरं स्वैरं गच्छन्तु भवन्तः। आश्रमबाधा यथा न भवति, तथाहमपि यतिष्ये [१]। [क]

सख्यौ। महाभाअ! विदिदभूयिट्ठोसि। सम्पदं उवआर-मज्झत्थदाए अवरद्ध म्ह; तं मरिसेहि. असम्भाविदसक्कारं भूयो वि पच्चवेक्खणणिमित्तं अज्जं विण्णवेम्ह [२]। [ख]

(ख) महाभाग! विदितभूयिष्ठोऽसि। साम्प्रतमुपचारमध्यस्थतया अपराद्धाः स्मः; तन्मर्षय, असम्भावितसत्कारं भूयोऽपि प्रत्यवेक्षणनिमित्तमार्य्यं विज्ञापयामः।

(क) राजेति। स्वैरं स्वैरं मन्दं मन्दम्। तथा च इदानीमपि द्रुतगमनं प्रति न किञ्चित् कारणमुपस्थितमिति भावः। तत्र हेतुमाह आश्रमेति।

"मन्दस्वच्छन्दयोः स्वैर" मित्यमरः।

(ख) सख्याविति। महान् भागो भाग्यं यस्य तत्सम्बोधनम्। विदितमवगतं भूयिष्ठं बहुतरम् अस्माकमाचारमनोभावादिर्येन सः। एतेन शकुन्तलाया अपि मनोभावावगमात् पुनरपि तदागमनमावश्यकमेवेति सूचितम्। उपचारे भवतः सत्कारे मध्यस्थतया उदासीनतया, अपराद्धा अपराधिन्यः स्मो वयमिति शेषः; अवश्यकर्त्तव्या-करणादिति भावः। तत्र अपराद्धत्वम्, मर्षय क्षमस्व। असम्भावितः अस्माभिरनिष्पा-

রাজা। আপনারা ধীরে ধীরে গমন করুন। যাহাতে আশ্রমের ক্ষতি না হয়, আমিও সেইভাবে চেষ্টা করিব।

সখীদ্বয়। মহাশয়! বহুতর জানিয়াছেন। আপনার সেবায়

(१) राजा। अमन्यु मम्। गच्छन्तु भवन्तः। वयमप्याश्रमपीडा यथा न भवति, तथा प्रयतिष्यामहे। सर्वे उत्तिष्ठन्ति।

२ सख्यौ। अज्ज! असम्भाविदअदिहिसक्कारा भूयो पेक्खणणिमित्तं लज्जेमो अज्जं विण्णविदुं।

राजा। मा मैवम्। दर्शनेनैव भवतीनां सम्भृतसत्-कारोऽस्मि [१]। [ग]

शकु। हला अणसूए! अहिणव-कुस-सूइ-परिक्खदं मे चलणं, कुरवअ-साहा-परिलग्गञ्च वक्कलं, दाव परिवालेध मं जाव णं मोआवेमि। इति राजानमवलोकयन्ती सव्याजं विलम्ब्य सह सखीभ्यां निष्क्रान्ता। (घ)

---

च्छितः सत्कारः सेवा यस्य सः। अतएव भूयः पुनरपि प्रत्यवेक्षणनिमित्तं सन्दर्शनार्थम्। दर्शनदानाय सत्कारलाभाय च भवता पुनरप्यवागन्तव्यमिति प्रार्थयाम इति तात्पर्य्यम्।

(ग) राजेति। एवम् असम्भावितसत्कारत्वम्, मा मा नखलु नखलु जातमिति शेषः। तत्र हेतुमाह दर्शनेनैवेत्यादि। सम्भृतसत्कारः सञ्जातसत्कारः। तथा च प्रीतिकरो व्यापारो नाम सत्कारः। तेन च भवतीनां दर्शनेन ईदृशी मे प्रीतिः कृता, यथा व्यापारान्तरेण तादृशी कर्त्तुं न शक्यते। एवञ्च सत्काराकरणात् यदपराद्धत्व-माशङ्कमानाभिरुद्घोषितं तदपि न जातमित्याशयः।

(घ) शकु इति। अभिनवस्य कुशस्य सूच्या अग्रभागेन परिक्षतम्। वल्कलञ्च परि-च्छितवल्कलञ्च, कुरवकस्य वृक्षविशेषस्य शाखायां परिलग्नम् असावधानतया संसक्तम्।

---

ঔদাসীন্য করায় এখন আমরা অপরাধী হইয়াছি; তা ক্ষমা করুন। আপনার সেবা করা হয় নাই বলিয়া আবারও দর্শনদানের জন্ত আপনাকে জানাইতেছি।

রাজা। না না; এরূপ হয় নাই। আপনাদের দর্শনেই আমার সৎকার হইয়াছে

শকুন্তলা। ওগো অনসূয়া! নূতন কুশাগ্রে আমার চরণ ক্ষত হইয়াছে

---

(१) ...भवतीनां पुरस्कृतोऽस्मि।

राजा । निश्वस्य । गताः सर्वाः। भवतु, अहमपि गच्छामि शकुन्तलादर्शनादेव मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकानतिदूरे तपोवनस्य निवेशयामि । नखलु शक्तोऽस्मि शकुन्तलादर्शनव्यापारादात्मानं निवर्त्तयितुम् । मम हि—

(१) (ङ]

---

(घ) हला अनसूये ! अभिनव-कुश-सूचि-परिक्षतं मे चरणम्, कुरुवक-शाखा-परिलग्नञ्च वल्कलम्। तावत् प्रतिपालयतं माम्, यावदेनं मोचयामि।

---

प्रतिपालयतं प्रतीक्षेथाम् । एनं वल्कलम् । व्याजेन वल्कलमोचनच्छलेन सहैनि सव्याजम् । एतेन राजानं प्रति महाननुरागो व्यज्यते ।

अतएवात्र अनुरागरूपस्य बीजस्य पुनरुत्पत्तेरुद्भेदो नाम मुखसन्धेरङ्गम् 'बीजार्थस्य प्ररोहः स्यादुद्भेदः' इति लक्षणात् ।

(ङ) राजेति । भवतु सर्वासामेव गमनमिति शेषः । अत्र तु निवारणोपाय एव नास्तीति भावः । अहमपि गच्छामि, अत्रावस्थानस्य निष्फलत्वादित्याशयः । मन्दमल्पीभूतम् औत्सुक्यमुद्योगो यस्य सः, नगरगमनं प्रति राजधान्यां गमनविषये

---

এবং বল্কলখানি কুরুবকশাখায় লাগিয়া পড়িয়াছে; তা আমার জন্য প্রতীক্ষ কর, যাবৎ ইহা মুক্ত করি। (এই বলিয়া রাজাকে দেখিতে দেখিতে কপটতাবশতঃ বিলম্ব করিয়া, সখীদ্বয়ের সহিত চলিয়া গেল )

রাজা (নিশ্বাস ত্যাগ করিয়া) সকলেই গেল । হউক, আমিও যাই ।

---

(१) राजा । मन्दौत्सुक्योऽस्मि नगरगमनं प्रति । यावदनुयात्रिकान् समेत्य नातिदूरे तपोवनस्य निवेशयेयम् । न खलु शक्नोमि शकुन्तलाव्यापारादात्मानं निवर्त्तयितुम् मम हि।

गच्छति पुरः शरीरं धावति पश्चादसंस्थितं चेतः ।
चीनांशुकमिव केतोः प्रतिवातं नीयमानस्य ॥३६॥

---

अत्रावस्थाने यदि शकुन्तलां लभेयमित्याशयेत्यभिप्रायः। यावत् सर्वान्। 'यावत्तावच्च साकल्येऽवधौ मानेऽवधारणे" इत्यमरः। अनुयात्रिकान् अनुचरान्। निवेशयामि स्थापयामि ; आश्रमबाधानिवृत्त्यर्थमिति भावः।

अतएवात्र करणं नाम मुखसन्ध्यङ्गम् , 'करणं पुनः। प्रकृतार्थसमारम्भः" इति लक्षणात्।

पुनरनुरागावस्थां व्यनक्ति न खल्विति। आत्मानं मनः। अनुरागाकर्षस्य दुर्निवारत्वादित्याशयः।

गच्छतीति ममेति प्रागुक्तमत्रान्वेति। तथा च मम शरीरम् , पुरः अग्रतो गच्छति , तपोवनस्यातिदूरे अनुयात्रिकाणां निवेशनार्थमिति भावः। किन्तु , प्रतिवातं वायोः प्रतिकूलं वाताभिमुखं यथा स्यात्तथा , नीयमानस्य केतोर्ध्वजस्य , चीनांशुकम् उपरिबद्धं राङ्कवं वस्त्रमिव तत्पताकेवेत्यर्थः , असंस्थितम् अस्थिरं चञ्चलमिति यावत् , चेतश्चित्तम् , पश्चाद्दिशि धावति वेगेन गच्छति ; शकुन्तलारूपादिभिः समाकृष्टत्वादित्याशयः। यथा ध्वजदण्डे वाताभिमुखं नीयमाने , तदीयपताका वायुना पश्चाद्दिशि धाव्यते , तथा शरीरे अनुयात्रिकाभिमुखं नीयमानेऽपि मनः शकुन्तलानुरागेण तां प्रति पश्चाद्दिशि धाव्यत इति समन्वयार्थः ।

---

শকুন্তলার দর্শনবশতঃ রাজধানীতে যাইতে মন্দোৎসাহ হইয়াছি। অনুচরদিগকে তপোবনের অতিদূরে সংস্থাপিত করি। শকুন্তলার দর্শন-ব্যাপার হইতে আপনাকে নিবৃত্ত করিতে সমর্থ হইতেছি না। কারণ—

যেমন বায়ুর প্রতিকূলে ধ্বজ সঞ্চালিত করিলে, তাহার পতাকা পিছনের দিকে যায়, সেইরূপ আমার শরীর সম্মুখে যাইতেছে; কিন্তু অস্থির চিত্ত পিছনের দিকে দৌড়াইতেছে ॥৩৬॥

इति निष्क्रान्ताः सर्वे (१) । (च)

## प्रथमोऽङ्कः ॥०॥ (छ)

---

अत्र श्रौतीपमालङ्कारः । गच्छति पुरः शरीरमित्यनन्तरं सामर्थ्यादेव किन्त्वर्थाव-गमो भवतीति तदनुक्तावपि न न्यूनपदत्वदोषः 'क्वचिन्न दोषो न गुणः" इति दर्पणा-भिधानात् ।

'चीनो देशे चतन्तुषु । चीनो वस्त्रे' इति हेमचन्द्रः । तेन च चीननिर्मितमंशुकं चीनांशुकम् इति मध्यपदलोपी समासः ।'

आर्य्या जातिः ॥३६॥

(च) इतीनि । इति इत्युक्तेः परम् । राज्ञः केवल शरीररक्षिण आ सर्वे वेति मन्तव्यम्, ते च तदानीं दूरे अवस्थिताः, तैः सह राज्ञो बहुत्वात् बहुवचनं सर्व-शब्दोपादानञ्च सङ्गच्छते ।

पूर्वं शकुन्तलादीनाम् इदानीञ्च राज्ञः प्रस्थानेन संहतिभेदनात् भेदाख्यमसुख-सन्धेरङ्गम्, 'भेदः संहतिभेदनम्" इति दर्पणलक्षणात् ।

(छ) प्रथम इति । अङ्कः परिच्छेदः समाप्त इति शेषः ।

'प्रत्यक्षनेतृचरित' इत्यादि 'अन्तनिष्क्रान्तनिखिलपात्रोऽङ्कः" इत्यन्तमङ्कलक्षणम् साहित्यदर्पणे अनुसन्धेयम् ।

'अङ्कः स्थाने ऽन्तिके मन्तौ रूपकोत्सङ्गलक्ष्मसु ।
नाटकादिपरिच्छेदे चित्रयुद्धे च भूषणे इति विश्वः । एवमन्यत्रापि बोध्यम् ।' ॥

इति श्रीहरिदासमिद्धान्तवागीशभट्टाचार्य्यविरचितायाम्
अभिज्ञानशकुन्तलटीकायामभिज्ञानकौमुद्याः
प्रथमाङ्कविवरणं समाप्तम् ॥०॥

---

(ইহার পর সকলেই চলিয়া গেল)

## প্রথম অঙ্ক ॥০॥

---

(१) क्वचित् इति शब्दो नास्ति ।

# द्वितीयोऽङ्कः ।

ततः प्रविशति विदूषकः (१) । (क)

**विदू ।** निश्वस्य । भो ! हदोह्मि (१) एदस्स मिअआ-

---

(क) तत इति । शृङ्गारिनायकस्य सहायविशेषो विदूषकः । तथा च साहित्य-दर्पणे—

'शृङ्गारेऽस्य सहाया विटचेटविदूषकाद्याः ।

भक्ता नर्म्मसु निपुणाः कुपितवधूमानभञ्जनाः शुद्धाः ॥"

विदूषकस्य लक्षणमपि तत्रैव । यथा—

'कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः ।

हास्यकरः कलहरतिर्विदूषकः स्यात् स्वकर्म्मज्ञः ॥'

इतः प्रभृति तृतीयाङ्कगत—'पृष्टा जनेन समदुःखसुखेन बाला' इत्यादिश्लोकात् पूर्वपर्य्यन्तः प्रतिमुखसन्धिः । तथा चात्र शकुन्तलासम्मेलनरूपफलप्राप्तौ अतित्वरान्वित-भावेन राज्ञो दुष्मन्तस्य शकुन्तलान्वेषणात्मकव्यापाररूपः प्रयत्नो नाम द्वितीया कार्य्याव-स्था निबद्धा । यथा तत्रैव —

'प्रयत्नस्तु फलावाप्तौ व्यापारोऽतित्वरान्वितः ।'

एवं शकुन्तलादुष्मन्तयोः सम्मेलनरूपफलस्य प्रधानोपायभूतौ यत्नयोः परस्परानु-रागौ मुखसन्धौ निविष्टः, तस्यात्र 'कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि"

---

তদনন্তর বিদূষকের প্রবেশ ।

---

(१) विप्रश्नो विदूषकः ।

সীলস্স রণ্ণো বঅস্সভাবেণ ণিব্বিণ্ণো (২) অঅং মিও, অঅং বরাহো, অঅং সদ্দূলো ত্তি মজ্ঝন্দিণে বি গিম্হে বিরলপাদব-চ্ছাআসু বণরাইসু আহিণ্ডিঅ পত্তসঙ্করকসাঅবিরসাইং উণ্হকডুআইং পিজ্জন্তি গিরিণঈসলিলাইং (৩) (খ)।

---

(খ) ভোঃ! হতোঽস্মি এতস্য মৃগয়াশীলস্য রাজ্ঞো বয়স্যভাবেন নির্বিণ্ণঃ। অয়ং মৃগঃ, অয়ং বরাহঃ, অয়ং শার্দ্দূল ইতি মধ্যন্দিনেঽপি গ্রীষ্মে বিরলপাদপচ্ছায়াসু বনরাজিষু আহিণ্ড্য পত্রসঙ্করকষায়বিরসানি

---

ইত্যাদিনা দুষ্মন্তে লক্ষ্যতয়া উদ্ভেদ; শকুন্তলায়াস্তু স্পষ্টানভিধানাত্ অবস্থয়া সূচিতত্বাচ্চ অলক্ষ্য ইব উদ্ভেদঃ কবিনা সন্দর্শিতঃ। যথা তত্রৈব—

'ফলপ্রধানোপায়স্য মুখসন্ধিনিবেশিনঃ।
লক্ষ্যালক্ষ্য ইবোদ্ভেদো যত্র প্রতিমুখঞ্চ তত্ ॥"

অস্য তু বিলাসাদীনি ত্রয়োদশ অঙ্গানি যথাস্থানং নিবেশ্য লক্ষণানি বক্ষ্যাম।

(খ) ভো ইতি। ভো ইতি বিষাদসূচকমব্যয়ম। "ভোস্তু সম্বোধনবিষাদয়োঃ"

---

বিদূষক। ( নিশ্বাস ত্যাগ করিয়া ) হায়! মারা গেলাম এই মৃগয়াসক্ত রাজার বয়স্যরূপে কষ্ট ভোগ করিয়া। গ্রীষ্মকালে বেলা দুপুরের সময়েও এই হরিণ, এই শূকর এবং এই বাঘ এই করিয়া বনশ্রেণীর ভিতরে বিচরণ করিতে হয়; তাহাতে গাছের ছায়া কমই পাওয়া যায়; তাহাতে

---

(১) দিট্ঠং।

(২) ণিব্বিণ্ণো ম্হি।

(৩) মজ্ঝণ্ণে বি। গিম্হবিরলপাঅবচ্ছাআসু বণরাইসু আহিণ্ডীঅদি অডবীদো অডবী।

अणिअदवेलञ्च उण्होसणं सभूइट्ठं भुज्जीअदि (१) [ग]। तुर-
अगआआणाञ्च सद्देण रत्तिं पि मे णत्थि पकामसुइदव्वं (२)[घ]।

---

उष्णकटुकानि पीयन्ते गिरिनदीसलिलानि। (ग) अनियतवेलञ्च उष्णोष्णमांसभूयिष्ठं भुज्यते। (घ) तुरगगजानाञ्च शब्देन रात्रा-

---

इति मे दैन्यम्। वयस्यभावेन सख्येन। निर्विण्णः प्राप्तनिर्वेदो दुःखित इति यावत्। तत्कारणमाह अयमित्यादि। दिनस्य मध्यमिति मध्यन्दिनम् 'दिवसवरूढादयश्च" इति निपातः। ग्रीष्मे ग्रीष्मकाले मध्यन्दिनेऽपि मध्याह्नेऽपि। एतेन तापाधिक्यं सूचितम्। विरला अन्तरान्तरातपयुक्ताः पादपानां वृक्षाणां छाया यासु तासु, वनराजिषु वनश्रेणिषु, आहिण्ड्यते विचर्य्यते। "हिडि गतौ" इत्यस्य कर्म्मणि प्रयोगः। पत्राणां नानाजातीय-वृक्षपर्णानां सङ्करेण सम्मिश्रणेन कषायाणि सन्निर्य्यासानि अतएव विरसानि कुस्वादानि, तथा उष्णानि च तानि आतपतापादिति भावः कटुकानि अल्पकटुरसानि चेति तानि, गिरिनदीसलिलानि पर्व्वतप्रस्रवणजलानि पीयन्ते। अन्येषां सुस्वादुजलानामलाभात् ईदृशजलपानस्य च गुरुतरश्रमजनकत्वात् निर्विण्ण इति भावः।

कषायविरसानि उष्णकटुकानीति च "प्रसन्नकर्कशा भारती" "श्यामं प्रसन्नगम्भी-रम्" इत्यादिवत् परपदस्य विशेष्यत्वविवक्षया कर्म्मधारयः। कटुकेति अल्पार्थे कप्रत्ययः।

(ग) अनियतेति। अनियता अनिर्द्दिष्टा वेला कालो यस्मिन् कर्म्मणि तद् यथा तथा; आपेक्षिकसुविधया कदाचित् पूर्व्वाह्णे कदाचित् मध्याह्ने कदाचिदपराह्ण इत्यर्थः, उष्णोष्णानि शैत्यसम्पादनावसराभावात् अत्युष्णानि मांसान्येव भूयिष्ठानि बहुलानि यस्मिन् तत् एतेन चिराभ्यस्तभोजनाभावात् महत् दुःखं सूचितम्।

---

আবার পার্ব্বত্যনদীর যে জল পান করা হয়, সেগুলি গাছের পাতা

---

(१) अनिअदवेलं सूल्लमंसभूइट्ठो आहारो अण्हीअइ।

(२) तुरगाणुधावणकण्डिदसन्धिणो रत्तिम्मि णिकामं सइदव्वं णत्थि।

फोड़ओ संवुत्तो (१) [च]। तेण हि किल अम्हेसु अवरोहेसु तत्थभअदा मिआणुसारिणा अस्समपदं पविट्ठेण मम अधण्णदाए सउन्तला णाम कावि तवस्सिकण्णआ दिट्ठा, तं पेक्खिअ सम्पदं णअरगमणस्स कथम्पि ण करेदि (२) (छ)।

---

एतावतापि मे पीड़ा न संवृत्ता, यतः अयं गण्डस्य उपरि विस्फोटकः संवृत्तः (च)। तेन हि किल अस्मासु अवरोहेषु तत्रभवता मृगानुसारिणा आश्रमपदं प्रविष्टेन मम अधन्यतया शकुन्तला नाम कापि तपस्विकन्यका दृष्टा, तां प्रेक्ष्य साम्प्रतं नगरगमनस्य कथामपि न

---

हीनेत्यर्थः। पीडा अस्वास्थ्यम्, संवृत्ता सञ्जाता। गण्डस्य कपोलस्य। विस्फोटकः नितान्तपीडाकरो व्रणविशेषः, संवृत्तः सञ्जातः। तेन वासस्य दुःखं जातमिति भावः।

(छ) दुःखान्तरमाह तेनेति। तेन उक्तविधेन दुःखप्रवाहेण पीडामानेत्यर्थः, अवरोहेषु वेगेन राज्ञो गमनाय पश्चात् स्थितेषु सत्स्विति तात्पर्यम्, तत्रभवता मान-

---

গালের উপরে এই একটা বিস্ফোটক হইয়াছে, সেই জন্যই অস্য কষ্ট হইতেছে। তাহাতে আবার রাজা, আমাকে পিছনে ফেলিয়া, অত্যন্তবেগে একটা হরিণের অনুসরণ করিতে করিতে, তপোবনে প্রবেশ করিয়া, আমারই দুরদৃষ্টবশতঃ শকুন্তলা নামে কোনও তপস্বি-কন্যাকে দেখিয়াছেন; তাহাকে দেখিয়া এখন আর বাড়ী যাওয়ার

---

(१) एत्तएण दाव्वि वि पीड़ा ण णिक्कमइ। तदो गण्डस्सउवरि पिण्डओ संवुत्तो।

(२) तिम्रो किल अम्हेसु ओहीणेसु तत्तहोदो मआणुसारेण अस्समपदं पविट्ठस्स तावसकण्णआ सउन्तला णाम मम अधण्णदाए दंसिदा। संपदं णअरगमणस्स णअं वि ण करेइ।

एवं ज्जेव चिन्तअन्तस्स मे पहादा अच्छिसु रअणी, का गदी। जाव णं किदआआरपरिग्गहं पिअवअस्सं पेक्खामि [१] (ज)। परिक्रम्यावलोक्य च। एसो वाणासणहत्थो हिअअ-णिहिद-पिअअणो वणपुप्फमालाहारी इदो ज्जेव, आअच्छदि पिअवअस्सो

करोति (झ)। एवमेव चिन्तयतः मे प्रभाता अक्ष्णोः रजनी, का गतिः। यावदेनं कृताचारपरिग्रहं प्रियवयस्यं प्रेक्षे (ज)। एष बाणासनहस्तः हृदय-निहित प्रियजनः, वनपुष्पमालाधारी इत एव

मोदेन गत्वा, मृगानुसारिणा मृगस्य पश्चात् धावता, आश्रमपदं तपोवनम्, प्रविष्टेन मता। अधन्यतया पुण्यशून्यतया मन्दभाग्यतयेत्यर्थः। कथामपि प्रस्तावमपि। तत्रत्य शान्तिलाभोपायोऽपि नास्तीत्याशयः।

(ज) एवमिति। एवमेव इत्थमेव, चिन्तयतः शयित्वैव भावयतः। अक्ष्णोरपि, रजनी प्रभाता, बहिरालोकप्रसरणात् बहिः सर्वथैव प्रभाता, शयनकुञ्जेऽप्यालोकागमनात् चक्षुषोरपि प्रभातेत्यर्थः, का गतिः शान्तिलाभे क उपायः, अपि तु क्वापि नास्तीत्यर्थः। कृत आचारपरिग्रहः मृगयोचितवेशधारणं येन तम्।

(झ) परीति। परिक्रम्य कियन्तं पदक्षेपं कृत्वा। बाणान् अस्यति क्षिपत्यनेनेति बाणासनं धनुः हस्ते यस्य सः, हृदये निहितः स्थापितः प्रियजनः शकुन्त

নামও করেন না। শয়ন করিয়া এইরূপই কেবল চিন্তা করিতেছিলাম, এই অবস্থায় আমার চোখে রাত পোহাইয়া গিয়াছে; তা উপায় কি? যাহা হউক, মৃগয়াবেশধারী প্রিয়সখার সহিতই সাক্ষাৎ করি। (পদক্ষেপপূর্ব্বক দর্শন করিয়া) এই যে বনপুষ্পমালাধারী প্রিয়বয়স্য, মনে মনে প্রিয়জনের চিন্তা করতঃ, ধনু হাতে করিয়া এই দিকেই আসিতেছেন।

(१) अज्ज वि तस्स तं एव्वं चिन्तअन्तस्स अच्छीसु पहादं आसि …किदाआर-परिग्गहं (किदहारपरिग्गहं)।

[১]। [ঝ] ভোদু, অঙ্গভঙ্গ- বিঅলো ভবিঅ চিট্ঠিস্সং। এব্বং পি ণাম বিস্সামং লহেঅং (২)। ইতি দণ্ডকাষ্ঠমবলম্ব্য স্থিতঃ। (ঞ)

ততঃ প্রবিশতি যথানির্দ্দিষ্টো রাজা (৩)। (ট)

রাজা। আত্মগতম্।

---

আগচ্ছতি প্রিয়বয়স্যঃ (ঝ)। ভবতু, অঙ্গভঙ্গবিকলো ভূত্বা স্থাস্যামি। এবমপি নাম বিশ্রামং লভেয়।

---

ষ্ঠীতি তাৎপর্য্যং যস্য সঃ, প্রিয়া শকুন্তলা চিন্তয়িতব্যা:। এতচ্চ নয়নভঙ্গ্যাদিনা অনুমিতমিতি বোধ্যম্।

(ঞ) ভবত্বিতি। ভবতু পুনরপি মৃগানুধাবনাদিপ্রস্তাব ইতি শেষঃ। অঙ্গানাং করচরণাদিমস্তকাবয়বানাং ভঙ্গেন অস্বাস্থ্যসূচককৌটিল্যকরণেন বিকলঃ অস্বাভাবিকাবস্থঃ। এবমপি অঙ্গভঙ্গবিকলভাবেনাবস্থানেনাপি। নাম সম্ভাবয়ামি। ঈদৃগবস্থাদর্শনাৎ অস্বাস্থ্যানুমানেন মাং প্রতি রাজ্ঞো বিশ্রামানুমতিদানস্যৈব সর্ব্বথা সম্ভবাদিতি ভাবঃ। দণ্ডকাষ্ঠং কাষ্ঠময়ং দণ্ডম্।

(ট) তত ইতি। যথানির্দ্দিষ্টঃ বাণাসনহস্তাদিরূপঃ।

---

হউক, অঙ্গ-ভঙ্গ-বিকল হইয়া থাকি। দেখি ইহাতেও যদি বিশ্রাম লাভ করিতে পারি। (এই বলিয়া যষ্টি অবলম্বন করিয়া থাকিল)

তাহার পর নির্দ্দিষ্টরূপে রাজার প্রবেশ।

---

(১) বাণাসণ হত্থাহিং জবণীহিং বণপুপ্ফমালাধারিণীহিং পরিবুদো ...।

(২) ... বিঅলো বিঅ ...। জই এব্বং বি।

(৩) ... যথানির্দ্দিষ্টপরিবারো রাজা।

(৪) ক্বচিৎ আত্মগতমিতি নাস্তি।

कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि (१)।
अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते ॥१॥

---

काममिति। प्रिया शकुन्तला, कामम् अर्थेष्टम्, न सुलभा अत्यनायासलभ्या न कथञ्चिदायासेन लभ्या तु स्यादित्यर्थः। तथा च मां प्रति तस्या अनुरागे सत्यपि पराधीनतया आत्मदानासम्भवात् न अत्यनायासलभ्या, सख्यादिभिर्मत्कुलशीलावस्था-दिवर्णनेन कण्वादीनां तत्प्रभूणां सम्मतिसम्भवात् कियदायासलभ्या तु स्यादिति भावः। तु किन्तु, मनो मम चित्तम्, तस्याः शकुन्तलाया भावदर्शनेन अनुरागव्यञ्जकस्निग्धदृष्ट्या-द्यवलोकनेन आश्वसिति तत्प्राप्तिसम्भावना जनितानन्दमनुभवतीति तत् तथोक्तं जात-मिति शेषः। ननु लिप्सितायाः असुलभत्वे कथमाश्वासानन्द इत्याह अकृतार्थेऽपीति। मनसिजे कामे, अकृतार्थेऽपि तत्फलभूत सुरतसुखानुत्पत्त्या अचरितार्थे सत्यपि, उभयप्रार्थना नायकनायिकयोः परस्परप्राप्त्याकाङ्क्षा, रतिं सम्भाव्यमानं सम्मेल-नानन्दम्, कुरुते जनयति। सुतराञ्च मम मनस्तद्भावदर्शनाश्वासि जातमित्याशयः।

अत्र परार्द्धसामान्येन पूर्वार्द्धविशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः, तथा अप्रस्तु-तात् नायकनायिकात्मकोभयसामान्यात् प्रस्तुतयोर्दुष्मन्तशकुन्तलारूपयोर्विशेषनायक-नायिकयोः प्रतीतेरप्रस्तुतप्रशंसा च, अनयोरेकाश्रयानुप्रवेशरूपः सङ्करः।

तथात्र शकुन्तलायां दुष्मन्तस्य समीहाकरणात् विलासो नाम प्रतिमुखसन्ध्यङ्गम् यथा साहित्यदर्पणे

---

রাজা। (স্বগত) প্রিয়তমা শকুন্তলা একেবারে সুলভ নহে; কিন্তু তথাপি আমার মন তাহার অবস্থা দেখিয়া আশ্বস্ত হইয়াছে। তাহার কারণ এই যে, কাম চরিতার্থ না হইলেও, নায়ক নায়িকার পরস্পরের প্রার্থনা, পরস্পরের আনন্দ জন্মাইয়া থাকে ॥১॥

---

(१) तद्भावदर्शनायासि।

स्मितं कृत्वा। एवमात्माभिप्रायसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता विप्रलभ्यते (१) कुतः (२) (ठ)

---

"समीहा रतिभोगार्था विलास इति कथ्यते।"
इदमेव तत्रोदाहृतं द्रष्टव्यम्। आर्य्या जातिः ॥२॥

(ठ) स्मितमिति। स्मितम् आत्मनो भ्रान्तत्वसूचकं मन्दहास्यं कृत्वेत्यर्थः। आत्मनो भ्रान्तत्वमेव व्यनक्ति एवमिति। एवम् अनेन प्रकारेण अहमिवेत्यर्थः, आत्माभिप्रायेण निजमनोवृत्त्यानुरूप्येणेति तात्पर्य्यम् सम्भाविता निरूपिता इष्टजनस्य नायकस्य नायिकाया वा चित्तवृत्तिर्मनोभावो येन सः, प्रार्थयिता कामयिता जनः, विप्रलभ्यते प्रतार्य्यते। तथा च कश्चिज्जनो जनान्तरस्य भावविशेषमजानन् 'मयि खल्वयमनुरक्तः' इत्येवं मन्यमानो यदा तस्मिन् प्रसक्तुमुपक्रमते, तदा तु तद्भावस्य विषयान्तरगततया स्वाभाविकतया वा स खल्विष्टजनः प्रकुप्यति उदास्ते उपहसति वा। तेन च स जन इष्टजनेन प्रतारित एव भवतीति फलितार्थः। इत्थञ्च तेषां शकुन्तलाभावानां विषयान्तरगतत्वेनापि सम्भवात् तयाहं प्रतारित एव भवामीति भावः। ननु आत्माभिप्रायेण आत्मविषये तादृशी इष्टजनचित्तवृत्तिः कथं सम्भाविता, यत एवमित्यादि सामान्यमुपन्यस्तमित्याह कुत इति।

---

(ঈষৎ হাস্য করিয়া) নিজের মনোবৃত্তি অনুসারে যিনি ইষ্টজনের মনোবৃত্তি স্থির করেন, সেই প্রার্থী ব্যক্তি এই রূপই প্রতারিত হন। কারণ,—

---

(१) विलभ्यते।
(२) क्वचित् कुत इति नास्ति।

स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया
यातं यच्च नितम्बयोर्गुरु-तया मन्दं विलासादिव ।
मा गा इत्युपरुद्धया यदपि तत्सासूयमुक्ता सखी,
सर्व्वं तत् किल मत्परायणमहो कामः (१)स्वतां पश्यति ॥२॥

स्निग्धमिति । तया शकुन्तलया, नयने नेत्रद्वयम् अयतः अन्यस्मिन् वस्तुनि, प्रेरयन्त्यापि प्रकाश्यभावेन निक्षिपन्त्यापि, स्निग्धं सानुरागम्, यत् वीक्षितं गोपनीयभावेन ताराद्वयं सञ्चाल्य मयि दृष्टिपातः कृतः; नितम्बयोर्गुरुतया स्थूलत्वेन भारवत्तया, विलासादिव मयि विभ्रमं प्रदर्श्यैव, यत् मन्दं यानम् अल्पमल्पं गमनं कृतम्; तथा मा गा न गच्छ इति इत्थम्, उपरुद्धया प्रियंवदाकर्त्तृकमनुरुद्धया सत्या शकुन्तलया सखी प्रियंवदा, यदपि तत् "दाणिं किं तुह आअमोच्चि" इत्यादिपूर्वोक्तप्रकारम्, सासूयं ईर्ष्यम् यथा स्यात्तथा, उक्ता । तत सर्व्वम्, अहमेव परम् अयनम् आश्रयो विषयो यस्य तत् तादृशम्, किल सम्भावयामीत्यर्थः । अहो आश्चर्य्यम्, कामः कामावेशः, स्वतां परविषयाणामपि भावानामात्मविषयताम्, पश्यति उत्प्रेक्षते सम्भावयतीत्यर्थः । तथा च तेषां शकुन्तलाभावानां पदार्थान्तरविषयकतायाः स्वाभाविकतायां वा सम्भवेऽपि यन्मया मद्विषयकत्वं सम्भावितम्, एतदेव मे भ्रान्तत्वम् । तेन च यदेवाह'

শকুন্তলা অন্যদিকে নয়নযুগল নিক্ষেপ করিয়াও যে অনুরাগের সহিত দৃষ্টিপাত করিয়াছেন এবং আমাকে বিলাসভাব দেখাইবার জন্যই যেন নিতম্বযুগলের ভারবশতঃ যে অল্প অল্প গমন করিয়াছেন, আর "যাইও না" এইরূপ উপরোধ করিলে পর, অসূয়ার সহিত সখীকে সেই যাহা কিছু বলিয়াছেন, সে সমস্ত আমার বিষয়ে (করিয়াছেন)। কি আশ্চর্য্য! কাম পরবিষয়ক ব্যাপারকেও স্ববিষয়ক বলিয়া মনে করে ॥২॥

(১) কামী ।

विदू । (तथास्थित एव) भो महाराअ ! ण मे हत्थो पसरदि, ता वाआमित्तेण जआवीअसि । जअदु जअदु भवं (१) । (ङ)

---

(ङ) भो महाराज ! न मे हस्तः प्रसरति, तत् वाचामात्रेण जाप्यसे । जयतु जयतु भवान् ।

---

तदधीन तस्यां प्रसङ्गं प्रवर्त्तितुं तदैव तया प्रकुप्यन्त्या उदासीनया उपहसन्त्या वा सख्या प्रतारणीय इति भावः ।

अत्र कामः स्वतो पश्यतीति सामान्येन पूर्वविशेषसमर्थनादर्थान्तरन्यासोऽलङ्कारः ।

"वार्त्तासम्भाव्ययोः किल" इत्यमरः । शार्दूलविक्रीडितं वृत्तम् ॥२॥

(ङ) विदू इति । दण्डकाष्ठमवलम्ब्य वक्रभावेन स्थित एव । प्रसरति आशीर्वादाय उत्थानावश्यकत्वेऽपि उत्थातुं न शक्नोति मालीन्यवशादिति भावः । तत् तस्मात्, वाचामात्रेण केवलेन वाक्येन, न पुनर्हस्तोत्थापनेनेत्यर्थः, जाप्यसे जयपार्श्वी क्रियसे ।

वाचेति वाक्शब्दस्य टाप् । तथा च

"वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
टापञ्चापि हलन्तानां यथा वाचा निशा गिरा ॥"

जाप्यसे इति । जयं प्रयुज्यत इति इनि "क्रिजिक्रीङाम्णिचि" इति जेरकारस्य आकारः "अर्त्तिह्री" इत्यादिना पकारागमश्च ।

---

বিদূষক। (সেই ভাবে থাকিয়াই) মহারাজ! আমার হাত চলিতেছে না; তাই কেবল বাক্যদ্বারা আপনার সংবর্দ্ধনা করিতেছি॥ আপনার জয় হউক, আপনার জয় হউক।

---

(१) ...हत्थपाआ पसरन्ति... जीआविअसि ।

রাজা। (বিলোক্য সস্মিতম্) কুতোঽয়ং গাত্রোপঘাতঃ [১]। [ঢ]

বিদূ। কথং কুদো ত্তি, সঅং জ্জেব অক্খিং ভঞ্জিঅ অস্সু-কারণং পুচ্ছসি (২)। (থ)

রাজা। ন খল্ববগচ্ছামি, ভিন্নার্থমভিধীয়তাম্ (৩)। [ত]

---

(থ) কথং কুত ইতি, স্বয়মেব অক্ষি ভঙ্ক্ত্বা অশ্রুকারণং পৃচ্ছসি।

---

(ঢ) রাজেতি। কুতঃ কারণাৎ। গাত্রোপঘাতঃ অঙ্গবৈকল্যম্।

(থ) বিদূ ইতি। অক্ষি ভঙ্ক্ত্বা নয়নমুপমর্দ্য, কুতঃ ইতি কথমিদমশ্রু? ইত্যম্ অশ্রুণঃ নির্গতস্য তন্নয়নজলস্য কারণম্, কথং পৃচ্ছসীত্যন্বয়ঃ। ভবানেব মম তদ্গাত্রোপঘাতস্য কারণমিত্যাশয়ঃ।

(ত) রাজেতি। অবগচ্ছামি তব বাক্যার্থমিতি শেষঃ। ভিন্নঃ শব্দাৎ ব্যঙ্গ্যার্থাৎ পৃথক্ কৃতঃ অর্থো যস্য তৎ ভিন্নার্থং স্পষ্টার্থং বাক্যমিত্যর্থঃ।

---

রাজা। (ঈষৎ হাস্যের সহিত) তোমার এই অঙ্গ বৈকল্য হইল কেন?।

বিদূষক। নিজেই চোখে আঘাত করিয়া—'চোখের জল পড়িতেছে কেন?' ইহা জিজ্ঞাসা করিতেছ কিজন্য?।

রাজা। বুঝিতে পারিলাম না। স্পষ্ট করিয়া বল।

---

(১) ক্বচিৎ বিলোক্য সস্মিতমিতি নাস্তি।

(২) কুদো কিল এদং অচ্ছী আউলীঅদি।

(৩) ক্বচিৎ ভিন্নার্থমভিধীয়তাম্ ইতি নাস্তি।

विदू । जं वेदसो खुज्जस्स लीलं विडम्बेदि, तं किं अत्तणो पहावेण ? अथवा णईवेअस्स ? [१] । [थ]

राजा । नदीवेगस्तत्र कारणम् । [द]

विदू । मम वि भवं । [ध]

राजा । कथमिव ? । (न)

विदू । जुत्तं णाम एव्वं, जं तुए रज्जकज्जाइं उज्झिअ तादिसं अक्खलिदपदं पदेसं च वणचलवित्तिणा होदव्वं

---

(थ) यत् वेतसः कुब्जस्य लीलां विडम्बयति, तत् किम् आत्मनः प्रभावेण ? अथवा नदीवेगस्य ? ।

(ध) ममापि भवान् ।

(प) युक्तं नाम एवम्, यत् त्वया राजकार्याणि उज्झित्वा तादृशं

---

(थ) विदू इति । वेतसः स्वनामख्यातो लताविशेषः, यत् कुब्जस्य जनस्य, लीलां क्रियां कुब्जभावमित्यर्थः, विडम्बयति अनुकरोति, तत्कुब्जलीलाविडम्बनम्, प्रभावेण आत्मा । नदीवेगस्य प्रभावेनेति सम्बन्धः ।

(द) राजेति । अत्र कुब्जलीलाविडम्बने । तथा च नदीवेग एव वेतसं कुब्जं करोति, स्वयन्तु स सरल एवेत्यर्थः ।

(ध) विदू इति । तद्वत् ममापि गात्रोपघाते भवान् कारणमित्यर्थः ।

---

বিদূষক। বেত যে কুব্জলোকের অবস্থার অনুকরণ করে, সে কি নিজের শক্তিতে ? না নদীবেগের শক্তিতে ?

রাজা। সে বিষয়ে নদীর বেগই কারণ।

বিদূষক। আমারও তুমি।

রাজা। কি রকম ? ।

---

(১) মো বণবণ।...খুজ্জলীলং...ণং বাই বিঅস।

স্তি। কিং এত্থ মন্তীঅদু। অহং বহ্মণো পচ্চহং সাপদাণুসর-
ণেহিং সংক্খোহিদসন্ধিবন্ধণাণং অঙ্গাণং অণীসোম্হি।
তা পসীদ মে, একাহম্পি দাব বিসমীঅদু (১)। (প)

---

অস্খলিতপদং প্রদেশস্থ বনচরবৃত্তিনা ভবিতব্যমিতি। কিমত্র মন্ত্র্য-
তাম্, অহং পুনর্ব্রাহ্মণঃ প্রত্যহং শ্বাপদানুসরণৈঃ সংক্ষোভিত সন্ধি
বন্ধনানামঙ্গানামনীশোঽস্মি। তৎ প্রসীদ মে, একাহমপি তাবদ্
বিশ্রম্যতাম্।

---

(ন) রাজ্ঞেতি। কথমিব তব গাত্রাপঘাতে অহং কারণমিত্যর্থঃ।

(প) বিদু ইতি। এবং ভবতশ্চরিতম্, যুক্তং নাম সঙ্গতং সম্ভাব্যতে, 'উপহাস অহো তব কিমুচ্যতে" ইত্যাদিবদ্বিপরীতলক্ষণয়া অতীবাযুক্তং সম্ভাব্যত ইত্যর্থঃ। কিমু-দিত্যাহ যদিতি। উজ্ঝিত্বা পরিত্যজ্য। ন স্খলিতং ন প্রচ্যুতং পদং স্থানং যস্মিন্ তম্ সর্বদৈব রক্ষোপায়সম্পন্নমিত্যর্থঃ প্রদেশং রাজধানীঞ্চ, উজ্ঝিতেত্যন্বয়ঃ, বনচরস্য সততবনবিচরণশীলস্য ব্যাধস্য বৃত্তিরিব বৃত্তির্ব্যবহারো যস্য তেন তাদৃশেন ভবিতব্যম্ ত্বয়েতি শেষঃ। তথা চ পালনাত্মকং রাজকর্ম্ম বিহায় যৎ হিংসাত্মিকা মৃগয়া ক্রিয়তে, যচ্চ সর্বথা নিরাপদং রাজধানীং পরিত্যজ্য নানাবিপৎসঙ্কুলে বনে বিচর্য্যতে, তদতীবাযুক্তমিত্যাশয়ঃ।

---

বিদূষক। ইহা সঙ্গতই হইতেছে যে, তুমি রাজ্যের কার্য্য এবং সেইরূপ নিরাপদস্থান পরিত্যাগ করিয়া একেবারে ব্যাধবৃত্তি হইয়াছ। আমি তোমার এ প্রশ্নের কি উত্তর দিব, আমি ব্রাহ্মণ হইয়া প্রতিদিন

---

(১) এব্বং রাঅকজ্জাই উজ্ঝিঅ এআরিসে অক্খলিঅপদেসে বণচরবুত্তিণা তুএ হোদব্বং। অং অহং পচ্চহং সাবদসমুচ্চারণেহিং সংক্খোহিঅসন্ধিবন্ধণাণং অঙ্গাণং অণীসোম্হি সংবুত্তো। তাপসাদইস্সং বিসজ্জিদুং মং একাহং বি বিস্সমিদুং।

सहवसतिमुपेत्य यैः प्रियायाः
कृत इव लोचनकान्तिसंविभागः ॥३॥

विदू। (राज्ञो मुखमवलोक्य।) अत्तभवं किम्पि हिअए करिअ मन्तेदि, अरण्णे क्खु मए रुदिदं [१]। (ब)

---

(ब) अत्र भवान् किमपि हृदये कृत्वा मन्त्रयति, अरण्ये खलु मया रुदितम्।

---

नेति। अध्यारूढा ज्या मौर्वी यत्र तदधिज्यम्, तथा आहितः सन्धानं प्रापितः सायको बाणो यत्र तदाहितसायकम्, इदं धनुः, मृगेषु हरिणेषु हरिणान् लक्षीकृत्येत्यर्थः, नमयितुम् आकर्षुम्, न शक्तोऽस्मि न शक्नोमि। कथमित्याह सहेति। यैः मृगैः, सहवसतिम् एकत्रावस्थानं तन्निबन्धनं सौहार्दमिति तात्पर्यम्, उपेत्य प्राप्य प्रियायाः शकुन्तलायाः सम्बन्धे, लोचनयोश्चक्षुषोः कान्तेः शोभायाः संविभागः सम्यग् विभज्य दानम् कृत इव। तथा च प्रियायाः सुहृत्सु मयापि सौहार्दस्य औचित्यात् आदरकरणमेव न्याय्यं न पुनर्हिंसेत्याशयः।

अत्र पूर्वार्द्धं प्रति परार्द्धवाक्यार्थो हेतुरिति वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः, वाच्या भावाभिमानिनी क्रियोत्प्रेक्षा च, अनयोः परस्परनिरपेक्षतया संसृष्टिः। उत् प्रियायाश्च हरिणनयनमिव शकुन्तलानयनं सुन्दरमित्युपमाव्यञ्जनात् इत्यलङ्कारेणालङ्कारध्वनिः।

पुष्पिताग्रा वृत्तम् ॥३॥

(ब) विदू इति। हृदये कृत्वा चिन्तयित्वेत्यर्थः: मन्त्रयति स्वयमेव मुखं भाषते। अतएव मया खलु अरण्ये रुदितं अरण्ये रोदनमिव व्यर्थकमुक्तम्, भवता अन्यमनस्कतया अश्रुतत्वादित्याशयः।

---

গুণ আরোপিত আছে, বাণও তাহার উপর স্থাপিত হইয়াছে, তথাপি কিন্তু হরিণগণের প্রতি এ ধনু আকর্ষণ করিতে পারিতেছি না।

---

(१) ...रण्णे मए रुदिदं पाठः।

রাজা। সস্মিতম্। অনতিক্রমণীয়ং সুহৃদ্বাক্যমিতি স্থিতোঽস্মি (১)। (ভ)

বিদূ। সপরিতোষম্। তেণ হি তুমং চিরং জীব ২ ইত্যুত্থাতুমিচ্ছতি। (ম)

রাজা। তিষ্ঠ, শৃণু মে সাবশেষং বচঃ (২)। (য)

---

(ম) তেন হি ত্বং চিরং জীব।

---

(ভ) রাজেতি। সুহৃদো ভবতো বাক্যম্, অনতিক্রমণীয়ম্ অলঙ্ঘনীয়ম্, ইতি হেতোঃ, স্থিতোঽস্মি অবস্থিতোঽস্মি কিমপি কথনাৎ বিরতোঽস্মীত্যর্থঃ।

(ম) বিদূ ইতি। সপরিতোষং পরিতোষব্যঞ্জকং মুখপ্রফুল্লতাদিকমভিনীয়েত্যর্থঃ। তেন হি মদ্বাক্যরক্ষণেনৈব হেতুনা। উত্থাতুং বিশ্রামার্থং গমনায়েতি শেষঃ।

(য) রাজেতি। সাবশেষম্ অবশেষপর্য্যন্তম্। তথা চ উক্তমাত্রং শ্রুত্বা ন গন্তব্যম্, বক্ষ্যমাণমপি শ্রোতুং ত্বয়া স্থাতব্যমিত্যর্থঃ।

---

কারণ, যে হরিণগণ একত্র অবস্থাননিবন্ধন ( বন্ধুতাবশতঃ ) আপনাদের নয়নের সৌন্দর্য্য, প্রিয়তমা শকুন্তলাকে যেন ভাগ করিয়া দিয়াছে ॥৩॥

বিদূষক। ( রাজার মুখের দিকে দৃষ্টিপাত করিয়া ) তুমি মনে মনে চিন্তা করিয়া কোন বিষয় আলোচনা করিতেছ, আর আমি অরণ্যে রোদন করিলাম।

রাজা। ( ঈষৎ হাস্যের সহিত ) বন্ধুর বাক্য লঙ্ঘন করা যায় না, এই জন্য নীরব রহিয়াছি।

বিদূষক। ( সন্তোষের সহিত ) তা হইলে তুমি দীর্ঘজীবী হও। ( এই বলিয়া চলিয়া যাইবার জন্য উঠিল )

---

(১) কিমন্যৎ। অনতিক্রমণীয়ং মে…।

(২) বিদূষকঃ। চিরং জীব।

विदू। आणवेदु भवं। (र)

राजा। विश्रान्तेन भवता ममाप्यस्मिन्ननायासे कर्म्मणि सहायेन भवितव्यम् [१]। (ल)

विदू। किं मोदअखज्जिआए (२)। (व)

राजा। यद्‌ वक्ष्यामि (३)। (श)

---

(र) आज्ञापयतु भवान्।

(व) किं मोदकखादिकायाम्।

---

(ल) राजेति। विश्रान्तेन कृतविश्रामेण। "गत्यर्थाकर्म्मक" इत्यादिना अकर्म्मकात् श्रमेः कर्त्तरि क्तः। अस्मिन् मृगयाभिन्ने, न विद्यते आयासो यस्मिन् तत् अपरिश्रमसाध्ये इत्यर्थः; अतो न परिश्रमभयादस्वीकारः कर्त्तव्य इति भावः।

(व) विदू इति। मोदकं लड्डुकविशेषस्तस्य खादिकायां खादने किं मया भवतः सहायेन भवितव्यमित्यर्थः। अनायाससाध्यत्वात्तत्र तत्राहमवश्यमेव सहायो भविष्यामीति भावः। औदरि प्रायेण खाद्यपरमेव व्यवहरतीति कौतुककरमेतत।

अत्र नर्म्म नाम प्रतिमुखसन्ध्यङ्गम् "परिहासवचो नर्म्म" इति लक्षणात्।

खादिकेति प्रश्ने खादधातोः "प्रश्नाख्यानयोरिञ् च वा" इति वुञ प्रत्ययः।

(श) राजेति। यद्‌ वक्ष्यामि, तत्र सहायेन भवितव्यमित्यर्थः।

विदूषकेण उक्तविधे परिहासे कृतेऽपि राज्ञो धैर्य्यादत्र नर्म्मद्युतिर्नाम प्रतिमुखसन्ध्यङ्गम् "धृतिस्तु परिहासजा। नर्म्मद्युतिः" इति लक्षणात्।

---

রাজা। থাম্; শেষপর্য্যন্ত আমার কথা শোন্।

বিদূষক। আদেশ কর।

---

(१) ...ममाप्यस्मिन्...।

(२) किं मोदअखज्जिआए। ✓ण हि अत्र सुमङ्गीदो अण्णो।

(३) यत्र वक्ष्यामि। कः कोऽत्र भोः।

विदू। गहीदो क्खणो [१]। (घ)

राजा। कः कोऽत्र भोः!। [ङ]

दौवारिकः। प्रविश्य। आणवेदु भट्टा। [च)

राजा। रैवतक! सेनापतिस्तावदाहूयताम्। (छ]

दौवा। तह। इति निष्क्रम्य सेनापतिना सह प्रविश्य। एदु एदु

---

(घ: गृहीतः क्षणः।

(च) आज्ञापयतु भर्त्ता।

---

(घ) विदू इति। खणं समयः अवकाश इत्यर्थः, गृहीतः स्वीकृतः, अवकाश-मात्रं यावत् स्थास्यामीति तात्पर्य्यम्।

(ङ) राजेति। भो इति परिजनसम्बोधने। कः कः परिजन तिष्ठतीति शेषः।

(च) दौवेति। द्वारे नियुक्तो दौवारिकः। भर्त्ता स्वामी राजेति यावत्।

(छ) राजेति। रैवतीनामिकायाः स्त्रिया अपत्यमिति रैवतकः। अपत्यार्थ-अण प्रत्ययान्तात् रैवतशब्दात् संज्ञायां कप्रत्ययः।

---

রাজা। তুমি বিশ্রাম করিয়া, অনায়াসসাধ্য অন্য একটি কার্য্যে আমার সহায় হইবে।

বিদূষক। কি মোদকভক্ষণে?

রাজা। যে বিষয় বলিতেছি।

বিদূষক। শুনিবার অবসর লইলাম।

রাজা। ওহে! এখানে কে কে আছ?

দৌবারিক। (প্রবেশ করিয়া) মহারাজ আদেশ করুন।

রাজা। রৈবতক! সেনাপতীকে ডাক।

---

(১) অয়ং পাঠঃ ক্বচিৎ নাস্তি।

अज्जो। एस आलावदिण्णकण्णो भट्टा इध ज्जेव चिट्ठदि, [illegible] सप्पदु णं अज्जो (१)। [क]

सेना। राजानमवलोक्य स्वगतम्। दृष्टदोषापि मृगया स्वामिनि केवलं गुणायैव संवृत्ता। तथाहि देवः (२)। [ख]

अनवरतधनुर्ज्यास्फालनक्रूरवर्ष्मा [३]
रविकिरणसहिष्णुः स्वेदलेशैरभिन्नः [४]।

(क) तथा। एतु एतु आर्य्यः। एष आलापदत्तकर्णो [illegible] इह एव तिष्ठति, उपसर्पतु एनमार्य्यः।

(क) दौवेति। तथा यथा भवानाज्ञापयति तथा करोमीत्यर्थः। [illegible] कथोपकथने दत्तौ प्रेरितौ कर्णौ येन सः, भर्त्ता राजा। आर्य्यं सज्जनो [illegible]।

[ख] सेनेति दृष्टं प्रत्यक्षसिद्धं दोषः हि यज्जन्यौ विपत् अथवा [illegible] हिंस्या मया दृष्टदोषापि अन्यस्मिन् जने इत्यर्थः, मृगया पशुहिंसा, स्वामिनि राज्ञि [illegible]

দৌবারিক। তাহাই। ( নির্গত হইয়া, সেনাপতির সহিত পুনর্বা প্রবেশ করিয়া ) আসুন আসুন আপনি। এই যে আমাদের আলাপে কাণ দিয়া মহারাজ এইখানেই রহিয়াছেন। আপনি ইঁহার নিকট যান।

সেনাপতি। ( রাজাকে দেখিয়া স্বগত ) মৃগয়ার দোষ প্রত্যক্ষ দেখিতে পাইলেও, মহারাজের প্রতি তাহা কেবল গুণেই ঘটিয়াছে। কারণ,—

(१) ...एसो आलावदिण्णकण्णो इदो दिण्णदिट्ठी एव्व भट्टा चिट्ठदि। उवसप्पदु अज्जो।

(२) सेनापतिः। राजानमवलोक्य। दृष्टदोषापि स्वामिनि मृगया केवलं गुण एव संवृत्ता।...।

(३) क्रूरपूर्वम्, क्रूरकर्मा।

(४) रविकिरणसहिष्णु स्वेदलेशैरभिन्नम्।

अपचितमपि गात्रं व्यायतत्वादलक्ष्यं
गिरिचर इव नागः प्राणसारं बिभर्त्ति ॥४॥

---

...कम्, गुणार्थं व गुणसम्पादनार्थं व । तथाहि तमेवार्थं जानीहि । "तथ व्या-गमपरिपठितो धातुर्गतौ" इति कातन्त्रपरिशिष्टटीकायां गोपीनाथः । देवो राजा । एतच्च बिभर्त्तीतिक्रियायाः कर्त्तृ पदम् ।

अनेति । अनवरतं सततं धनुषो ज्याया गुणस्य आस्फालनेन क्रूरं कठिनं वर्ष्म शरीरं यस्य सः ; अतएव रविकिरणान् सूर्यरश्मीन् सहिष्णुः न पुनस्तेभ्य क्लान्त इत्यर्थः, तथा स्वेदलेशैः घर्म्मबिन्दुभिः अभिन्नः अविगलितः अविह्वल इति तात्पर्य्यम् । तेन च गिरौ पर्वते चरतीति गिरिचरः सर्वदा पर्वतसञ्चारी, नागोहस्तीव, अपचितमपि शक्र-विधपरिश्रमात् क्षीणमपि, व्यायतत्वात् परिच्छदपरिवृतत्वेन व्यायततया अतिशयेन विशालस्थूलतया स्वाभाविकत्वादित्यर्थः, अलक्ष्यं क्षामतया अदृश्यम्, तथा प्राणो बल-मेव सारः स्थिरांशो यत्र तत् प्राणसारं गात्रम् अङ्गनिवहम्, बिभर्त्ति धारयति । तथा च अन्यो राजा आजन्मसुखलालिततया कोमलदेहः रविकिरणासहिष्णुः घर्म्मबिन्दुभिः छिन्नजन्तुर्यो विपन्नश्च भवति, सुतरां तादृशे मृगया दुष्टदोषैव ; अस्माकमयं राजा तु मृगयाभ्यासादेव कठिनदेहः रविकिरण सहिष्णुः घर्म्मविह्वलः, छिन्नजन्तुश्च अविपन्नश्च । अतएव दुष्टदोषादि मृगया स्वामिनि केवलं गुणार्थैव संवृत्तेति भावः ।

अत्र श्रौतोपमालङ्कारः ।

"शरीरं वर्ष्म विग्रहः" इत्यमरः । "व्यायतं व्यापृते दीर्घे दृढे चातिशयेऽन्या-वत्" इति मेदिनी ।

मालिनी वृत्तम् ॥४॥

---

ধনুর গুণ অনবরত আকর্ষণ করায় মহারাজের দেহ কঠিন হইয়াছে, সূর্য্যের কিরণ সহ্য করিতে পারিতেছে এবং ঘর্ম্মবিন্দু নির্গত হওয়ায় বিহ্বল হইতেছে না। অঙ্গসকল কৃশ হইয়া থাকিলেও, পরিচ্ছদাবৃত

उपगम्य । जयति जयति स्वामी । स्वामिन् ! गृहीत-मृगप्रचारं सूचितस्वापदमरण्यम्, तत् किमन्यदनुष्ठीय-ताम् [१] । [ग]

राजा । भद्रसेन ! भग्नोत्साहः कृतोऽस्मि मृगयापवा-दिना माधव्येन (२) । [घ]

---

(ग) उपेति । उपगम्य राज्ञः समीपं गत्वा । स्वामी प्रभुः । गृहीतः अवगतः मृगाणां हरिणानां प्रचारो गमनागमनं यस्मिन् तत्, तथा सूचिताः पदचिह्नप्रदर्शना-दिना स्वचरेषु ज्ञापिताः स्वापदा व्याघ्रादयो हिंस्रजन्तवो यस्मिन् तत् । तथाच अस्मि-न्नरण्ये कुत्र देशे हरिणाः प्रचरन्ति कुत्र वा व्याघ्रादयो अवतिष्ठन्ते तत् अवगतमस्माभि-रित्यर्थः । एतेन एतदवगमार्थं सेनापतिं प्रति राज्ञ आज्ञा आसीदिति बोध्यम् । तत् तस्मात्, अन्यत् उक्तकार्यद्वयभिन्नम् किं कार्य्यम्, अनुष्ठीयतां मया क्रियताम्, तदा-ज्ञाप्यतामित्यर्थः ।

(घ) राजेति । भद्रा उत्कृष्टा सेना यस्य स भद्रसेन इति सेनापतेर्नाम, तत्-सम्बोधनम् । मृगयापवादिना मृगयाया निन्दाकारिणा, माधवे वसन्ते साधुरिति माध-व्यस्तेन तन्नाम्ना विदूषकेणेत्यर्थः । एवञ्च "कुसुमवसन्ताद्यभिधः" इत्यालङ्कारिकनि-यमः संगृहीत इति ज्ञेयम् । भग्नोत्साहो मृगयां प्रति नष्टोद्यमः । तदद्य न किञ्चिदन्यदनुष्ठातव्यम्, विश्रम्यतामित्याशयः ।

---

থাকায় বিশাল বলিয়া, তাহা লক্ষ্য করা যায় না ; সুতরাং পার্ব্বত্য হস্তীর ন্যায় ইনি, কেবল বলসার দেহ ধারণ করিতেছেন ॥৪॥

(নিকটে যাইয়া) মহারাজের জয় হউক, জয় হউক। মহারাজ! বনের ভিতরে হরিণগণের বিচরণস্থান জানিয়াছি এবং হিংস্রজন্তুগণের

---

(१) उपेत्य । जयतु स्वामी । गृहीतस्वापदमरण्यं किमन्यदनुष्ठीयते ।

(२)···मन्दोत्साहः···माठव्येन ।

सेना। (जनान्तिकम्) सखे! माधव्य! स्थिरप्रतिज्ञो भव, अहं तावत् स्वामिनश्चित्तवृत्तिमनुवर्त्तिष्ये। (प्रकाशम्) देवः! प्रलपत्येष वैधेयः, ननु प्रभुरेव निदर्शनम्। पश्यतु देवः (१)। [ङ]

मेदश्छेदकृशोदरं लघु भवत्युत्थानयोग्यं वपुः [२]
सत्त्वानामपि लक्ष्यते विकृतिमच्चित्तं भयक्रोधयोः।

(ङ) सेनेति। आत्मना सहापि विदूषकः सख्येव व्यवहरतीति सेनापतिरपि 'सखे' इत्येव सम्बोधयति। स्थिरप्रतिज्ञो भव मृगया निवर्त्तनविषये इति शेषः। अनुवर्त्तिष्ये अनुसरिष्यामि। विधेयः आत्मनः कर्त्तव्याकर्त्तव्यज्ञानहीनतया सर्वथा-न्यस्यैव वचने स्थितः, विधेय एव वैधेयो मूर्खः प्रज्ञादित्वात् स्वार्थे अण्। प्रलपति अनर्थकं मृगयामपवदति। नन्विति दृढार्थकम्। प्रभुर्भवानेव, निदर्शनं मृगयाया उपकारित्वे दृष्टान्तः।

मेद इति। वपुः शरीरम्, मेदसः देहस्थधातुविशेषस्य छेदेन परिश्रमाधिक्यात् विनाशेन कृशं क्षीणमुदरं, यत्र तत्, अतएव लघु भारहीनम्, उत-

অনুসরণ করিয়াছি; অতএব আর কি করিব?।

রাজা। ভদ্রসেন! মৃগয়ার অপবাদকারী মাধব্য, মৃগয়া সম্বন্ধে আমাকে ভগ্নোৎসাহ করিয়াছে।

সেনাপতি। (বিদূষকের নিকট চুপি চুপি) সখে! মাধব্য! তুমি স্থিরপ্রতিজ্ঞ হও; আমি কিন্তু রাজার মনোবৃত্তির অনুসরণ করিব। (প্রকাশ্যে) মহারাজ! এ মূর্খ, অনর্থক বকিতেছে; কারণ মৃগয়ার উপকারিতাসম্বন্ধে মহারাজই দৃষ্টান্ত। তাহা মহারাজই দেখুন।

(१) माधव्य इति सम्बोधनं पश्यतु देवः, इति च क्वचित् नास्ति।

(२) उत्साहयोग्यं वपुः।

उत्कर्षः स च धन्विनां यदिषवः सिध्यन्ति लक्ष्ये चले,
मिथ्या हि व्यसनं वदन्ति मृगयामीदृग् विनोदः कुतः ॥५॥

---

एवं च उत्साहयोग्यम् सर्वेष्वेव कर्मसु उद्यमकरणक्षमं भवति । अपि तथा, सत्त्वानां जन्तूनां नाम, भयक्रोधयोः भयकाले क्रोधकाले च इत्यर्थः, विकृतिमत् सञ्जातविकारम्, चित्तं लक्ष्यते चेष्टाविशेषदर्शनेन अवगम्यते । तथाच सति युद्धेऽपि शत्रूणां भयस्य क्रोधस्य वा प्रागवगमात् वाहुल्येन सुविधैव जायते इति भावः । अपि चेति चार्थः । धन्विनां धनुर्द्धराणाम्, स उत्कर्षः प्राधान्यम्, यत् चले चञ्चले गमनशीले इति यावत्, लक्ष्ये शरव्ये, इषवो वाणाः, सिध्यन्ति कृतकार्य्या भवितुमर्हन्ति अप्रमत्ताविधाय शक्नुवन्तीत्यर्थः । अतएव मृगया मिथ्या हि मिथ्यैव व्यसनं वदन्ति 'मृगया व्यसनम्' इति मन्वादयो मिथ्यैव ब्रुवन्तीत्यर्थः; व्यसनस्य निरर्थकत्वात् मृगयायाश्च सार्थकत्वादित्याशयः । विशेषतश्च ईदृक् विनोद आमोदः, कुतः मृगयाभिन्नात् कस्मात् कार्य्यात् भवति, अपि तु कुतोऽपि नेत्यर्थः । अतएव एष वंश्यः प्रव-र्त्त्य इति भावः ।

अत्र मृगयाया व्यसनत्वस्य मिथ्यात्वं प्रति बहुकारणोपन्यासात् समुच्चयोऽलङ्कारः, तथा, वदन्तीत्यस्य वाक्यं प्रति पूर्ववाक्यत्रयार्थस्य हेतुत्वेन इति वाक्यार्थहेतुकं काव्यलिङ्गम् चार्या-लङ्कारौ इति ; एतयोश्च परस्परनिरपेक्षतया संसृष्टिः ।

"द्रव्यासुव्यवसायेषु सत्त्वमस्त्री तु जन्तुषु" इत्यमरः ।

मृगयाया व्यसनत्वमाह मनुः—

"मृगयाक्षो दिवास्वप्नः परीवादः स्त्रियो मदः ।
तौर्य्यत्रिकं वृथाट्या च कामजो दशको गणः ॥"

शार्दूलविक्रीडितं छन्दः ॥५॥

---

মৃগয়ার পরিশ্রমে মেদধাতু নষ্ট হওয়ায় উদর কৃশ হয় এবং শরীর হালকা ও উৎসাহের উপযুক্ত হয় ; ভয় এবং ক্রোধের সময় জন্তুদের

विदू। सरोषम्। अवेहि रे उच्छाअहेतुअ! अत्तभवं पइदिं आवण्णो, तुमं दाव दासीए पुत्तो अडईदो अडइं आहिण्डन्तो जाव सिआलमिअलोलुअस्स कस्स वि जिण्णरिच्छस्स मुहे णिवड़िदो होहि [१]। (ध)

---

(ध) अपेहि रे उत्साहहेतुक! अत्रभवान् प्रकृतिमापन्नः, त्वं तावत् दास्याः पुत्रः अटवीतः अटवीमाहिण्डमानः यावत् शृगालमृग-लोलुपस्य कस्यापि जीर्णऋक्षस्य मुखे निपतितो भव।

---

(ध) विदू इति। अपेहि दूरं गच्छ। अत्रभवान् माननीयो राजा, प्रकृतिमापन्नः स्वप्रबोधेन स्वभावं प्राप्तः, उत्साहजननात् हेतुरसि त्वमिति। दास्याः पुत्रः हीन इत्यर्थः, अटवीतः अटवीम् वनात् वनम्, आहिण्डमानः पर्यटन्, शृगालमृगलोलुपस्य शृगालहरिणभोजनाय अभिलाषिणः। जीर्णऋक्षस्य वृद्धभल्लुकस्य।

---

চিত্তবিকার বুঝিতে পারা যায়: ধনুর্দ্ধরদিগের তাহাই প্রাধান্য যে, গমনশীল লক্ষ্যের প্রতি বাণগুলি কৃতকার্য্য হইতে পারে। অতএব মহর্ষিরা মৃগয়াকে যে ব্যসন বলিয়াছেন, তাহা মিথ্যা। কারণ, মৃগয়াভিন্ন এমন আমোদ কোথা পাওয়া যায় ॥৫॥

বিদূষক। (ক্রোধের সহিত) ওহে উৎসাহজনক! তুমি চলিয়া যাও। রাজা প্রকৃতিস্থ হইয়াছেন। দাসীর ছেলে তুমি, এক বন হইতে অন্যবনে বিচরণ করতঃ, শৃগাল ও মৃগলোভী বৃদ্ধ ভল্লুকের মুখে নিপতিত হও।

---

(१) अत्तभवं पकिदिं आवण्णो। तुमं अडवीदो अडवीं आहिण्डन्तो सवग्गाधि-लाणोलुअस्स जिण्णरिच्छस्स कस्स मिस्सुहे पडिस्ससि।

राजा। सेनापते! आश्रमसन्निकर्षे स्थितोऽस्मीति वचनं ते नाभिनन्दामि। अद्य तावत् (क) (१)

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु।
विश्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले (२)
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः ॥६॥

---

(क) राजेति। आश्रमस्य सन्निकर्षे समीपे। नाभिनन्दामि न प्रशंसामि त्वयाभिहितं वचनमभिनन्द्य तदनुसारेण न खलु मृगयायां प्रवृत्तो भवामीत्यर्थः, आश्रमसन्निकर्षे अवस्थानेन तत्रत्यप्राणिना हननस्य नितरामन्याय्यत्वादिति भावः। अद्येत्यस्य गाहन्तामित्यादिभिः श्लोकस्थक्रियाभिरन्वयः।

गाहन्तामिति। महिषाः, मुहुर्वारं वारं शृङ्गैस्ताडितम् आहतम्, निपीयते अस्मिन्निति निपानं जलाशयस्तस्य सलिलं जलम्, गाहन्ताम् आलोडयन्तु। मृगयातो निवृत्तत्वेन भयशङ्काभावात् यथास्वभावमाचरन्त्विति भावः। एवमन्यत्रापि। मृगकुलं हरिणसमूहः, छायायाम् अनातपे देशे बद्धं विहितं कदम्बकं समवेतभावो येन तादृशं सत्, रोमन्थं गिलितं वस्तु समुद्गीर्य्य पुनस्तस्य चर्वणम्, अभ्यस्यतु पौनःपुन्येन करोतु। वराहपतिभिः शूकरश्रेष्ठैः, विश्रब्धैः भयशङ्काभावेन आश्वस्तचित्तैः सद्भिः, पल्वले क्षुद्रजलाशये, मुस्ताक्षतिः मूलोत्पाटनेन मुस्तकानां हानिः, क्रियताम्। तथा इदम् अस्मद्धनुः, शिथिलः प्रान्तभागद्वये संश्लेषाभावात् श्लथीभूतः

---

রাজা। সেনাপতি! তপোবনের নিকটে রহিয়াছি; সুতরাং আপনার কথার প্রশংসা করিয়া মৃগয়ায় প্রবৃত্ত হইতে পারি না। অতএব আজ—

---

(१) भद्र सेनापते! आश्रमसन्निकृष्टे स्थिताः स्मः, अतस्ते वचः…

(२) विस्रब्धं क्रियतां वराहततिभिः।